वाल्मीकीयरामयणीयम्

# प्राचेतस राजशास्त्रम्

श्रीसुरेन्द्रझा 'सुमन'

मैथिली म[illegible]

दरभंग[illegible]

प्राचेतस राजशास्त्रम् ★★ श्रीसुरेन्द्रझा 'सुमन'

वाल्मीकीयरामयणीयम्

वाल्मीकीयरामायणीयम्

# प्राचेतस राजशास्त्रम्

श्रीसुरेन्द्रझा 'सुमन'

मैथिली म[illegible]

दरभं[illegible]

वाल्मीकीयरामायणीयम्

# प्राचेतस राजशास्त्रम्

श्रीसुरेन्द्रझा 'सुमन'

मैथिली मन्दिर
दरभंगा

VĀLMÍKÍYA RĀMĀYĀNÍYAM PRĀCHETASĀ RĀJĀSHĀSTRAM
BY - SHRI SURENDRA JHĀ 'SUMAN'

प्रकाशक : मैथिली मन्दिर, राजकुमारगंज, दरभंगा



प्रथम संस्करण १९९९

प्राप्ति स्थान — १. मैथिली मन्दिर
राजकुमारगंज, दरभंगा
२. प० श्री चन्द्रनाथ मिश्र 'अमर'
आदित्य सदन, मिश्रटोला
दरभंगा

मूल्य : २५०/—

लिपि संयोजन : दरभंगा कम्प्यूटर

मुद्रण : **दरभंगा ऑफसेट प्रिंटर्स**

# पूर्वाभाष्यम्

वाल्मीकीयं रामायणं प्रथितमेव आदिकाव्यरूपेण। पुनरिदम् 'इतिहास'–पदेनाऽपि प्रसिद्धं सत् 'इतिहास–पुराणाभ्यां वेदार्थमुपबृंहयेत्' इति वेदोपबृंहणार्थं रामायण–महाभारत–ग्रन्थ–द्वयं सर्वथा श्रद्धाधिष्ठानम्। 'रामायणं वेदसमम् (७/११५/४) इति वेदतुल्यं प्रथयता स्वयं वाल्मीकिना आश्रमस्थौ कुशीलवौ 'वेदोपबृंहणार्थाय तावग्राहयत प्रभुः' (१/४/६) सर्वज्ञानमयवेदस्य प्रतिरूपत्वेनग्रन्थस्यास्य गौरवं स्थापितम्।

तदिदं काव्यरूपेणापि 'न सा विद्या न सा कला जायते यन्न काव्याङ्गम्' इति सर्वशास्त्रमयत्वमस्य सिद्धम्। इतिहासरूपेणापि 'इतिहासः पुरावृत्तम्' इति पूर्वप्रवर्तित सकल राजवृत्त–लोकवृत्त–शासनानुशासनादि सङ्कलनात्मकतया पुनरस्य विषयव्यापकता स्वयं– सिद्धा। अथ पुनः 'परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इत्यवतरणसूत्रतो रावणस्य सर्वसत्ताधिष्ठानस्य विनाशपूर्वकं रामराज्यस्य स्थापनपरं रामायणं राजनीतिमूलकमिति स्वतः सिद्धम्। मन्त्रित्व–निर्वचने 'राजशास्त्रमनुष्ठिताः' इति स्पष्टं राजशास्त्रस्योपादेयतां प्रतिपादयता प्राचेतसा भगवता वाल्मीकिना स्वयमस्य ग्रन्थस्य शासनानुशासनपरता स्वीकृतेति सुव्यक्तम्।

काव्यशास्त्रे राजनये राष्ट्रियपुरातत्त्वविषये च रुचिं दधानस्य मे वाल्मीकिरामायण स्याध्ययने एतद् दृष्ट्या सुतरां प्रवृत्तिः।

द्वितीय–विश्वमहायुद्धस्य प्रारम्भिके समये प्राभातिके वृत्तपत्रे जर्मन–सैनिक–द्वारा फ्रान्सदेशाक्रमणप्रसङ्गे मध्यवर्तिनोः 'हालेण्ड–बेल्जियम' राज्ययोरुल्लंघनपूर्वकम् अभियानं पठन्नहं पुनः रामायणपारायणपरः सागरलङ्घनप्रसङ्गं समीकुर्वन् विवदमान–राष्ट्रयोर्मध्ये मध्यस्थ–राज्यस्य पूर्वापरधारणां समीक्षमाणोऽभूवम्। विश्वयुद्धा

वसानप्रसङ्गेऽपि 'अणुविस्फोटे तथा श्रीरामस्य सागरादुत्तरप्रदेशे दिव्यास्त्रप्रयोगे 'निपातितः शरो यत्र वज्राशनिसमप्रभः। तस्माद् व्रणमुखात् तोयमुत्पपात रसातलात्।' अवदारण शब्दश्च दारुणः समपद्यत।।' समानीभूतं तत्त्वं च अन्वभूवम्।

एवमेव विश्वस्य राष्ट्रस्य च दृश्यपटे प्रवर्तमानानि यानि दृश्यानि दृष्टानि-सन्धि-विग्रह -सीमातिक्रमण - क्षेत्रविभाजन - सङ्घसङ्घटन-हिंसाऽऽतङ्क-शरणार्थि-समस्या मानवाधिकार-पर्यावरण-समाज-परिवारकल्याण-प्रभृतीनि यावन्ति घटनाचक्राणि प्रवर्तितानि तावतां प्रसङ्गे यद्यद् रामायणे स्पष्टमस्पष्टं प्रसङ्गसङ्गतं विषयजातं-समाकलय्य ग्रन्थोऽयं क्रमशो द्रुत-विलम्बितगत्या समाकलितः। रामायण-महासागराद् बिन्दुसञ्चयेनाऽयं घटः समयक्रमेण सम्भृतः। व्यस्तजीवनेऽपि वत्सर-दशकैरान्तरान्तरा दत्तावधानेन मया यथा तथा ग्रन्थोऽयं ग्रथितो जातः। एवमत्र काचिदज्ञातप्रेरणा 'मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वतीति मानसीमास्थां प्रवोधयतीव उद्बोधयतीव प्रतीतिमुपगता।

अथ प्रकाशन-प्रसङ्गे केनाऽपि मान्यसंस्थानेन प्रकाश्यतामेतु ग्रन्थोऽयमिति मदीयाऽऽकांक्षा चिरायानुवर्तिता। पुनरहं यदा 'साहित्य अकादेमी' संस्थानतः सम्बद्धो जातस्तदा संस्कृत प्रतिनिधिना सम्पूर्णानन्द काशी संस्कृत विश्वविद्यालयकुलपतिपदप्रसाधिना श्रीमता विद्यानिवास मिश्रेण सह जातपरिचयोऽहं कदाचित् तेन जिज्ञासितः 'किं भवता कोऽपि संस्कृतग्रन्थो लिखितः?' 'आम्' ग्रन्थस्तु लिखितः किन्तु तत्रैकोऽपि शब्दो नास्ति मदीयः, तथा वाक्यं च प्रसङ्गसङ्गत नास्ति अन्यदीयम्' इत्युत्तरतश्चकित-चकितो मिश्रमहोदयः "किं भवान् प्रहेलिकां श्रावयति" इत्यनुयुक्तोऽहं कश्चन प्रसङ्गमुपस्थाप्य पुनः पुस्तकमपि तदग्रे कृतवान्। महानुभावोऽयं पुस्तकं यत्र-तत्र निरीक्ष्य समीक्ष्य 'प्रकाशनाय नः प्रदेयमित्यादिष्टोऽहं पाण्डुलिपिं तस्मै साह्लादमर्पितवान्। पुनरनेन संस्कृत-परामर्श-समितौ विचारार्थमुपस्थापितम्। समितेः सुधीसदस्यैः सर्वसम्मत्या स्वीकुर्वद्भिः ग्रन्थस्यास्य प्रचारलक्ष्यतः हिन्दीभाषया

आंग्लभाषया अनुवादाभ्यां सहैवास्य प्रकाशनानुशंसा कृता या च अकादेमी–कार्यसमित्या यथासमयं स्वीकृता।

पुनरथ सचिवेन श्रीमता इन्द्रनाथ चौधरी महोदयेनाऽहं पत्रद्वारा सूचितः, यदिदं हिन्दीभाषायां स्वयमनूद्य ततः परं केनापि यथोचित–विपश्चिता आङ्गलभाषायामपि अनुवादः कारयितव्यः। तदनुसृत्य भाषायामहं कृतानुवादप्रक्रियः पुनराङ्गलभाषानुवादकार्याय मिथिलाविश्वविद्यालयस्य आङ्ग्लभाषाप्राचार्य श्रीकृष्णमिश्र महोदयं समनुरोधितवान् । स च तदारभमाणेऽपि दुर्भाग्यवशाद् दीर्घरोगापन्नः पञ्चत्वं गतः। पुनरनुवादक–मार्गणेऽहं प्रवृत्तः। अत्रान्तरे पटना–विश्वविद्यालयस्य विश्रुतः प्राध्यापकः डॉ० श्रीमुरारि मधुसूदन ठक्कुरः कनाडा–विश्वविद्यालयतो गृहीतावकाशः पुनर्नेपालस्थित त्रिभुवनविश्वविद्यालये पदस्थापितः। मध्ये संयोगवशात् दरभङ्गामागत्य मां द्रष्टुमागतेन तेनाऽहं तदेव पुस्तकमनुशीलयन्नवलोकितः। पुनरनुवादकार्याय स्वेच्छामुदीरयता तेनाऽहं कृतकृत्यतां नीतः। ततो मया खण्डशः सानुवादं मूलं सर्वथा नैपुण्येनाऽनुवादयता तेन कृतिरियं पूर्णतां गमिता।

एभिः कारणकलापैरति विलम्बो जातस्तथापि उदारचेतसः श्रील चौधरी महोदयस्य प्रेरणया निष्ठापूर्वकमास्थामास्थाय भारतीयनयदृष्ट्या विश्वराजनीतिक परिवेशे रामायणस्याध्ययनरूपां सर्वथाऽचिन्त्यशक्तेः कृपाप्रसादात् कृतिमिमां सहृदय–पाठकानामधिसविधं सप्रश्रयं समर्पये।

पुनरेकधा प्रधानप्रेरकं श्रीमन्तं विद्यानिवासमिश्र महोदयं समितेः सदस्यांश्चानु–प्रेरकान् समभ्यर्थयानः डॉ०श्री मुरारि मधुसूदन महोदयं भूरि–भूरि वन्दे–अभिनन्दये।

एभिः कारणकलापैरतिविलम्बो जातस्तथापि भारतीय दृष्ट्या विश्व–राजनैतिक परिवेशे रामायणस्याध्ययनरूपां कृतिमिमां सर्वथाऽचिन्त्यशक्तेः कृपाप्रसादात् पूर्णतां गता अकादेमीकेन्द्रीयकार्यालयं सम्प्रेष्य निश्चिन्ततामुपगतोऽहम्।

एतन्मध्ये अकादेमी–संस्थानस्य पञ्चवार्षिकं व्यवस्था–परिवर्तनं कलितम्। ततश्च वर्षावधेः पश्चात् सहसा अकल्पित रूपेणाऽहं कुतश्चित् परतः आलेखप्रकाशनाय प्रवर्ततामिति प्रतिबोधितो हतप्रभः पुनरहमभूवम्।

अथ स्थितावस्यां पुनरत्र ममजन्मभूमि वल्लीपुर निवासि ग्रामीणजन–समायोजिते अभिनन्दनप्रसरे महामहिम राज्यपाल सुन्दरसिंह भंडारी महोदयानां समुपस्थितौ पूर्वकुलपतिभ्यां श्रीमद्भ्यां जयमन्तमिश्र–मदनेश्वरमिश्र महोदयाभ्यां प्रस्तावप्रक्रमे पूर्वमहाधिवक्ता श्रीताराकान्तझा महोदयः साहाय्योपक्रमे दत्तावधानः एतदायोजनं पुनरुज्जीजिवत्, राष्ट्रसेवापरायणः श्रीकैलासपतिमिश्र महोदयश्च मुहुरुद्वीवृधत्, तच्च क्रमशः सञ्चलितमेव वर्ततेतराम्। एतेषां समेषां विदुषां सविधे हृदा कृतज्ञतामर्पये।

ततः पुनरेकधा प्रकाशनप्रेरकान् श्रीमतो विद्यानिवासमिश्रमहानुभावान् परामर्शसमितेः सदस्यांश्च धन्यवादाञ्जलिभिः सम्मानयन् डा० श्री मुरारिमधुसूदनठक्कुर महोदयान् भूरि–भूरि अभिनन्दयन् सहवर्तिनः कतिचन प्रोत्साहकान् सुधींश्च समभ्यर्थयन् अग्रिमं वृत्तं प्रस्तौमि।

अथ चाहं रोगशय्याश्रितो वार्धक्यबाधितोऽपि बन्धुवरैः आर्यजुष्टैः विशिष्टगुणगणमण्डितैः पण्डितवरैः आयुष्मद्भिः 'अमर' नामधेयैः श्रीमद्भिः चन्द्रनाथमिश्र महोदयैस्तथा 'स्वदेश–सन्ध्या समिति' सदस्यवरैः आयुष्मद्भिः सर्वश्री भीमनाथझा–सुरेश्वरझा–फूलचन्द्रमिश्र 'रमण'–विद्याधरमिश्र–रमेन्द्रनारायण चौधरी–समरेन्द्रनारायण चौधरी–श्रीमदुमेशचन्द्रझा प्रभृतिभिर्विधीयमानं सहयोगमनुयोगं हृदा संवर्धये।

अथ चाहं सुधियः पाठकान् सप्रश्रयं निवेदये यदत्र प्रकाशनक्रमे विविधविधप्रसङ्गगतः विविधसमये नानाविधेषु च स्थानेषु स्थितेन मया विभिन्नेभ्यः संस्करण–सञ्चयन–निबन्धनग्रन्थेभ्यः श्लोकाङ्क–समुद्धरणप्रसङ्गेषु कदाचित् क्वचित् विभिन्नतां गतेषु अंकेषुविभेदमुपलभेरन् तदा ते मुद्रण–प्रकाशनावसरे नवतिवत्सरपरंवयः

स्थितं रोगशय्याश्रितं दृष्टिदोषदूषितमकृतकर्तव्यं मां कृपया क्षमितुमर्हेयुः करुणावरुणालयाः सहृदयाः सुकृतिनस्तत्र भवन्तः। अन्ते–

क्व सूर्यप्रभवो रामः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहाद् इति क्षम्योऽस्मि सद्बुधैः।।

पुनरन्ते अचिन्त्यशक्तौ नतिं–प्रणतिमर्पयन् प्रार्थयेऽहर्निशं यतः प्रेरितोऽहं जीवनस्य चरममध्यायं पूरयितुं प्रसक्तः श्रीमदाचार्य शङ्करस्य शब्दैः 'यद्यत् कर्मकरोमि तत्तदखिलं शम्भो तवाराधनम्।'

विदुषां विधेयः

'सुमन' उपनामा सुरेन्द्रझा (शर्मा)

मैथिली–मन्दिर, दरभङ्गा

गङ्गादशहरा, सं० २०५६ वि०

# वाल्मीकीयरामायणीयं

## प्राचेतस–राजशास्त्रम्

### *अनुक्रमणिका*

१. अवतरणिका

२. नमस्क्रिया

३. मङ्गलानुशंसनम्

४. ग्रन्थोद्देशोऽनुबन्ध–चतुष्टयञ्च

प्रथमं राज्य काण्डम्

५. राष्ट्रजीवन–प्रवर्तनाय राज्ञःप्रयोजनीयता

६. अराजकता

७. राजवृत्तयः

८. राज्यम् –

(क) जनपदराज्यम् (ख) कुलमित्रराज्यम् (ग) स्थापितराज्यम् (घ) शत्रुराज्यम् (ङ) तटस्थराज्यम्

९. राजचर्या

(क) आसज्जनीयाराजगुणाः (ख) वर्जनीयाराजदोषाः

१०. राजकीय संस्कारप्रक्रिया –

(क) उपयुक्त समयनिर्धारणम् (ख) स्थाननिर्देशः (ग) कृत्यक्रमः (घ) पूर्वकृत्यम् (ङ) रक्षाविधानम् (च) अभिषेकविधिः

११. राजधानी –

(क) आकार–प्रकारः (ख) प्राकारः (ग) राजप्रासादाः (घ) दुर्गम् (ङ) दुर्गद्वाराणि (च) परिखा (छ) संक्रमाः

१२. राजधान्यामुत्सवादिप्रसङ्गः –

(क) स्वागतप्रसङ्गत: (ख) सहभोजिना (ग) आमन्त्रण प्रक्रियायांपारस्परिकता

(घ) भोजनपानादिप्रकार:

१३. गृहविभागीयप्रकरणम् –

१४. राज्ञी

१५. राजकीयसंस्कारप्रसङ्ग: (क) शोकाचार:

१६. रक्षाव्यवस्था

## द्वितीयं व्यवस्थाकाण्डम्

१. मन्त्रिप्रकरणम्

२. मन्त्रणा (क) मन्त्रिकर्त्तव्यम्

३. मन्त्रणा

४. मन्त्रणासमुद्देश:

५. परिषद् –

(क) सचिवपरिषद् (ख) राज्यपरिषद् (ग) पौरजानपदपरिषद्

६. सभा, तन्नियमाश्च

७. सर्वमतसंग्रह:

८. राजदूतप्रकरणम्

९. चारप्रकरणम्

१०. शासनाधिकारिण: – तीर्थका.

११. राजभृत्यप्रकरणम्

१२. पारिपार्श्वका: सहचरा:

१३. अङ्गरक्षिण:

१४. किङ्करा:

१५. राजशिल्पिन: –

(क) मार्गनिर्माणम् (ख) जलसंसाधनम् (ग) सेतुनिर्माणम्

१६. व्यवहारप्रकरणम्

## तृतीयं नयाङ्गकाण्डम्

१. षाड्गुण्यम् –

(क) सन्धिः (ख) विग्रहः (ग) यानम् (घ) आसनम् (ङ) द्वैधीभावः (च) संश्रयः

२. त्रिवर्गः –

(क) वृद्धिः (ख) क्षयः (ग) स्थानम्

३. उपायाः –

(क) साम (ख) दानम् (ग) दण्डः (घ) विभेदः

४. शक्तयः –

(क) प्रभुशक्तिः: (ख) कोषजं प्रभुत्वम् (ग) मन्त्रशक्तिः (घ) उत्साहशक्तिः

५. सहायाः –

(क) कुलपुत्राः (ख) सामन्तवर्गः (ग) सुहृद्वर्गः (घ) परराष्ट्र साहाय्यम्

६. बल–त्रयम् –

(क) मित्रबलम् (ख) कोषबलम् (ग) दण्डबलम्

## चतुर्थं युद्धकाण्डम्

१. सैनिकसंघटनम् –

(क) सैन्यसंग्रहः (ख) संग्रहविधानव्यवस्था (ग) सैन्यस्य वेतनादिनियमाः

(घ) सैनिकदण्डव्यवस्था (ङ) योद्धृधर्मः (च) युद्धयात्रामुहूर्तादिविचारः

(छ) सैन्यान्नादानविधिः (ज) शस्त्राभ्यासः

२. अभियानम् –

(क) अभियानकालप्रतीक्षा (ख) अभियानावसरः

३. व्यूहरचनाप्रकारः

४. रणप्रसङ्गः –

(क) सैन्यमहत्त्वम् (ख) शस्त्रास्त्रमहत्त्वम् (ग) विजगीषोरुत्साहः

(घ) मित्रसहाय्यस्यमहत्त्वम् (ङ) सैन्यशिविर–व्यवस्था

५. अस्त्र–शस्त्राणि

६. अमोघास्त्रम्

७. युद्धभेदाः

८. सेनाप्रकारः

९. युद्धेव्यसनानि

१०. हताहतानां चिकित्सोपचारविधानम्

११. युद्धपरिषद्

पञ्चमं जन–जनपदकाण्डम्

१. जनपद–निवेशः

२. नगर–निवेशः

(क) महापुरी (ख) सामान्य नगरम्

३. नव–नगर–निवेशः

४. गिरि–परिवेशः –

(क) वनप्रदेशः (ख) नदीतटनिवेशः (ग) मरुप्रदेशः (घ) द्वीपोपनिवेशः

५. जनाः –

(क) विभिन्न मूलका दिव्यजातीयाः (ख) विजातीयाः सीमान्तवर्तिनः

(ग) वन्यजातीयाः

६. व्यवसाय प्रङ्गः –

(क) शिल्पव्यवसायिनः (ख) वाणिज्य–व्यापार–वार्ता–जीविनः
(ग) गन्धद्रव्यव्यवसायिनः
(घ) वस्त्रोद्योगः (ङ) खनिजोद्योगः (च) वनसम्पदा (छ) श्रमिकजनाः
(ज) कार्यपर्यवेक्षकाः
(झ) परिवहनकार्यम् (ञ) पशुपालनम् (ट) बलीवर्दरक्षणम् (ठ) गृहशिल्पकार्यम्

षष्ठकाण्डम् शासनानुशासनम्

१. शासनानुशासनसम्पर्कसूत्रम् –

(क) शिक्षकाः (ख) आचारनियमाः (ग) शिक्षोपक्रमे ज्ञानविज्ञानाद्यवगतिः (घ) खगोलज्ञानम्

२. शिष्टाचारप्रकरणम् –

(क) अभिवादनप्रकाराः (ख) आशीर्विधिः (ग) गमनोपक्रमे शुभाशंसनम् (घ) प्रस्थानकाले वाक्यप्रयोगः

३. आचारदोषाः

४. पारिवारिकी स्थितिः

५. सामाजिकी

६. पुरुषधर्मः

७. सामाजिकम्

८. अन्त्येष्टिप्रक्रिया –

(क) श्राद्धादौ भोजनम् (ख) यज्ञादिमहोत्सवे भोज्यविधानम्

९. समाजेधर्मस्थानम्

१०. कर्मकाण्डीयम्

११. तीर्थस्थलम्

१२. कामजं क्रीडाविलासस्थानम्

१३. लोकव्यवहारप्रसङ्गः

१४. आजीविका वृत्तयः

१५. नारीधर्मः

## सप्तमं संहिताकाण्डम्

नीतिसंहिता (अक्ष–मालिका)

सुभाषितानि (अक्ष–मालिका)

## *उपसंहारः*

०००

# अथ वाल्मीकीयरामायणीयं प्राचेतस–राजशास्त्रम्

## अवतरणिका

एतदाख्यानमायुष्यं सभविष्यं सहोत्तरम् ।
कृतवान् प्रचेतसः पुत्रस्तद्ब्रह्माप्यन्वमन्यत।। ७/१११/११

श्लोक एवास्त्वयं बद्धो नात्र कार्या विचारणा।
मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती ।।
तच्चाऽप्यविदितं सर्वं विदितं ते भविष्यति ।
न ते वागनृता शास्त्रे काचिदत्र भविष्यति।।– १/२/३१,३५

ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः।
पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा ।।–१/३/६

अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च।
न शक्यमीदृशं वक्तुं यदुवाच कवीश्वरः ।।–६/१८/८

न वादान्नापि संघर्षान्नाधिक्यान्नच कामतः।
वक्ष्यामि वचनं साधो यथार्थं वस्तु गौरवात्।।
एतावन्तु पुरस्कृत्य विद्यते तस्य संग्रहः ।।
यथाशक्ति मयोक्तं तु शास्त्रस्यास्यार्जवं प्रति।
प्रमाणं त्वं हि शेषस्य श्रुत्वा बुद्धिमतां वर ।।–६/१७/५२,६७,६८

क्रमशोमूलपाठः – *काव्यं, कपीश्वरः, राजन्, राम, राक्षसस्य नमस्क्रिया*

*नीति ज्ञान प्रबोधने प्रासङ्गिकस्य सुरगुरोर्बृहस्पतेस्तदुपदिष्टस्य च सुरपतेरिन्द्रस्य नमस्कृतिः पुरस्क्रियते। तदङ्गतया च साधिदैवतराष्ट्रप्रवर्तकाय तेजस्विने तत्त्वाय नमः प्रस्तूयते –*

"नमोस्तु वाचस्पतये सवज्रिणे।"

नक्षत्र ग्रहताराणामधिपो विश्वभावन:।
तेजसामपि तेजस्विन् द्रादशात्मन् नमोऽस्तुने।।
नम: पूर्वाय गिरये पश्चिमायाद्रये नम:।
ज्योतिर्गणानांपतये दिनाधिपतये नम:।।—६/१०५/१५—१६

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्योनमोऽस्तु चन्द्राग्निमरुद्गणेभ्य:।।
—५/१३/५९

## मङ्गलानुशंसनम्

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते।
वृत्रनाशे समभवत् तत्ते भवतु मङ्गलम्।।
यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत् पुरा।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम्।।
अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत्।
अदितिर्मङ्गलं प्रादात् तत्ते भवतु मङ्गलम्।।
ऋषय: सागरा द्वीपा वेदा लोका दिशश्च ता:।
मङ्गलानि महाबाहो दिशन्तु शुभमङ्गलम्।।
श्रुति:स्मृतिश्च धर्मश्च पान्तु त्वां पुत्र सर्वत:।
—२/२५/३२,३४,३६,१०

# प्रथमं राज्यकाण्डम्

## ग्रन्थोद्देशोऽनुबन्ध–चतुष्टयञ्च

धर्म यशस्यमायुष्यं राज्ञां च विजयावहम्।
राजशास्त्रमिदं चार्ष पुरा वाल्मीकिना कृतम्।।–६/१२८/१०७

जिज्ञास्यं विषयमुपस्थापयते –

कच्चित्ते कुशलं राजन्, कच्चिद्धर्मेण रञ्जयन्।
प्रजा पालयसे राजन् राजवृत्तेन धार्मिकः।।
कच्चित्ते संभृता भृत्याः कच्चित्तिष्ठन्ति शासने।
कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन।।
कच्चिद् बलेषु कोशेषु मित्रेषु च परन्तप।
कुशलं ते नरव्याघ्र पुत्र–पौत्रे तथानघ।।–१/५२/७–९

तथाहि –

कच्चिच्चैत्यशतैर्जुष्टः सुनिविष्ट जनाकुलः।
देवस्थानैः प्रपाभिश्च तटाकैश्चोपशोभितः।।
प्रहृष्टनरनारीकः समाजोत्सवशोभितः।
सुकृष्टसीमा पशुमान् हिंसाभिरभिवर्जितः।।
अदेवमातृकोरम्यः श्वापदैः परिवर्जितः।
परित्यक्तो भयैः सर्वैः खनिभिश्चोपशोभितः।।
विवर्जितो नरैः पापैर्मम पूर्वैः सुरक्षितः।
कच्चिज्जनपदः स्फीतः सुखंवसति राघव।। –२/६७/१०–१३
कच्चित्ते दयिताः सर्वे कृषिगोरक्षजीविनः।
भावयन्नात्मनाऽत्मानं यत्र सायंगृहोमुनिः।।
नाराजके जनपदे योग–क्षेमः प्रवर्तते।

न चाप्यराजके सेना शत्रून् विषहते युधि।।

नाराजके जनपदे नराः शास्त्रविशारदाः।

संवदन्तोपतिष्ठन्ते वनेषूपवनेषु च।।

नाराजके जनपदे माल्यमोदक दक्षिणाः।

देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः।। २/६७/१५–२४,२६,२७

*एवमराजकेषु जनपदेषु धर्मार्थकामरूपस्त्रिवर्गः, व्यक्ति–जाति–समाजनिष्ठः कर्मनिवहः, विद्या–कला–संस्कृति–संवादः, शस्त्र–शास्त्रप्रचारश्चावरुद्धा भवन्तीत्येवम् अराजकं राष्ट्र दृष्टान्तपुरस्सरं चित्रयति निष्फलं च कलयति –*

यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम्।

अगोपाला यथा गावस्तथा राष्ट्रमराजकम्।।–२/६७/२९

एवं हि मत्स्यन्यायेन मानवा निःस्नेहाः परस्परभक्षिणो नाशाय कल्प्यन्ते, यथा–

नाराजके जनपदे स्वकं भवति कस्यचित्।

मत्स्या इव जना नित्यं भक्षयन्ति परस्परम्।।–२/६७/३१

## राष्ट्रजीवन–प्रवर्तनाय राज्ञः प्रयोजनीयता

*एवं व्यतिरेकेण हानिमालक्ष्य, अन्वयेन राज्ञः शास्तुः प्रयोजनीयतामुपन्यस्यति–*

अहो तम इवेदं स्यान्न प्रज्ञायेत किञ्चन।

राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी। –२/६७/३६

राजमूलो हि धर्मश्च यशश्च जयतां वर।

तस्मात्सर्वास्ववस्थासु रक्षितव्या नराधिपाः।।–३/४१/१०

यतः –

ये हि सम्भिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः।

तेऽपि भावाय कल्पन्ते राजदण्ड–निपीडिताः।।

यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते।

तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः।।

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम्।
राजा माता पिता चैव राजा हितकरो नृणाम्।।–२/६७/३२–३४
दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च।
वार्तायां साम्प्रतं तात लोकोऽयं सुखमेधते।।–२/१००/४३–४७

अराजकता –

*ननु अराजका अपि खग–मृगादयो लोक्यन्त एव यथास्थानं जीवनं निर्वहन्तः कुतोऽयं बुद्धिमतां मनुजनुषां राजवरणे राज्य–संघटने वा व्यासङ्गः? इत्यत उच्यते –*

अराजकं हि नो राष्ट्रं विनाशं समवाप्नुयात्।–२/६७/८

अतः परिहरणीयामराजकतां पुनर्विशिनष्टि–

नाराजके जनपदे बीजमुष्टिः प्रकीर्यते।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे।।
अराजके धनं नास्ति नास्ति भार्याप्यराजके।
इदमत्याहितं चान्यत् कुतः सत्यमराजके।।
नाराजके जनपदे कारयन्ति समां नराः।
उद्यानानि च रम्याणि कृष्टाः पुष्पगृहाणि च।।
नाराजके जनपदे यज्ञशीला द्विजातयः।
सत्राण्यन्वासते दान्ता ब्राह्मणाः शंसितव्रताः।।
नाराजके जनपदे प्रहृष्टनटनर्तकाः।
उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः।।
नाराजके जनपदे सिद्धार्था व्यवहारिणः।
कथाभिरभिरज्यन्ते कथाशीलाः कथाप्रियैः।।
नाराजके जनपदे तूद्यानानि समागताः।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः।।
नाराजके जनपदे वाहनैः शीघ्रवाहिभिः।
नरा निर्यान्त्यरण्यानि नारीभिः सहकामिनः।।

नाराजके जनपदे धनवन्तः सुरक्षिताः।
शेरते विवृतद्वाराः कृषि–गोरक्षजीविनः।।
नाराजके जनपदे बद्धघण्टा विषाणिनः।
अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः।।
नाराजके जनपदे शरान् सन्ततमस्यताम्।
श्रूयते तल निर्घोष इष्वस्त्राणामुपासने।।
नाराजके जनपदे वणिजो दूरगामिनः।
गच्छन्ति क्षेममध्वानं बहुपण्यसमञ्चिताः।।
नाराजके जनपदे चरत्येकचरो वशी।
राजानो वानरश्रेष्ठ प्रदातारो न संशयः।।–४/१८/४१
राजा धर्मश्च कामश्च द्रव्याणां चोत्तमो निधिः।
धर्मः शुभं वा पापं वा राजमूलं प्रवर्तते।।–३/५०/१०

*ननु सत्स्वपि राजवत्सु राज्येषु किमिति न दूरी भवति प्रजाहानिपरस्प रेत्याशङ्का योग्यस्य शास्तुर्योगेनैव भवति देशोराजन्वान् इति योग्यं नेतारंविवेचयति –*

एष शास्ता च गोप्ता च नेता च युधिसत्तमः।
भूतिकामश्च मे नित्यं नित्यं च समरप्रियः।। – ६/५५/३

प्रसङ्गतः शास्तुर्गुणप्रशस्तिं प्रस्तौति –

स तु श्रेष्ठगुणैर्युक्तः प्रजानां पार्थिवात्मजः।
बहिश्चर इव प्राणो बभूव गुणतः प्रियः।।–२/१/१९
धर्मकामार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान्।
लौकिके समयाचारे कृतकल्पो विशारदः।।–२/१/२२
दृढभक्तिः स्थिरप्रज्ञो नाऽसद्ग्राही न दुर्वचः।
निस्तन्द्रीरप्रमत्तश्च स्वदोषपरदोषवित्।।
शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः।

य: प्रग्रहानुग्रहयोर्यथान्यायं विचक्षण:।।

सत्संग्रहानुग्रहणे स्थानविनिग्रहस्य च।

आयकर्मण्युपायज्ञ: सन्दृष्टव्ययकर्मवित्।।

श्रैष्ठ्यं चास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च।

अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालस:।।–२/१/२४–२७

नाश्रेयसि रतो यश्च न विरुद्धकथारुचि:।

उत्तरोत्तरयुक्तीनां वक्तावाचस्पतिर्यथा।।

अरोगस्तरुणो वाग्मी वपुष्मान् देश कालवित्।

लोके पुरुषसारज्ञ: साधुरेको विनिर्मित:।।

तमेवं वृत्तिसम्पन्नमप्रधृष्यपराक्रमम्।

लोकनाथोपमं नाथमकामयत मेदिनी।।–२/१/१७,१८,३४

*एवं च साधुरेको विनिर्मित: इति परम्परिते शासितरि समुपलब्धे तथा वा "लोकनाथोपमं नाथमकायत मेदिनी" इति काम्यतया वृते च नेतरि सिद्धमपपद्यते राजतन्त्रीयं प्रजातन्त्रीयं वा राज्यमिति तदादर्शभूतं रूपं निरूप्यते –*

प्रहृष्टमुदितो लोकस्तुष्ट: पुष्ट: सुधार्मिक:।

निरामयोह्यरोगश्च दुर्भिक्षभयवर्जित:।।

न पुत्रमरणं केचिद् द्रक्ष्यन्ति पुरुषा: क्वचित्।

नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रता:।।

न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तव:।

न वातजं भयं किञ्चिन्नापि ज्वरकृतं भयम्।।

न चापि क्षुद्भयं तत्र न तस्करभयं तथा।

नगराणि च राष्ट्राणि धनधान्ययुतानि च ।।–१/१/९०–९३

किञ्च –

न पर्यदेवन् विधवा न च व्यालकृतं भयम्।
न व्याधिजं भयं चासीद् रामे राज्यं प्रशासति।।
निर्दस्युरभवल्लोको नानर्थं कश्चिदस्पृशत्।
न च स्म बाला वृद्धानां प्रेतकार्याणि कुर्वते।।
एवं मुदितमेवासीत् सर्वोधर्मपरोऽभवत्।
राममेंवानुपश्यन्तो नाभ्यहिंसन् परस्परम्।।
निरामया विशोकाश्च रामे राज्यं प्रशासति।।
नित्यमूला नित्यफलास्तरवस्तत्र पुष्पिताः।
कामवर्षी च पर्यन्यः सुखस्पर्शश्च मारुतः।।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा लोभविवर्जिताः।
स्वकर्मसु प्रवर्तन्ते तुष्टाः स्वैरेव कर्मभिः।।
आसन् प्रजा धर्मपरा रामे शासति नानृताः।
सर्वे लक्षणसम्पन्नाः सर्त्रेधर्मपरायणाः।।– ६/१२८/९८–१०५

*एवं हि सर्वथाऽनुपद्रुतं धर्मप्राज्यं राज्यं प्राथम्येन नायकतया वृतः दुष्टनिग्रह–शिष्टानुग्रहाभ्यां परिपालयन् भूपालः दैव्या शक्त्या विशेष्यते–*

पञ्चरूपाणि राजानो धारयन्त्यमितौजसः।
अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च।।
औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम्।
धारयन्ति महात्मानो राजानः क्षणदाचर।।– ३/४०/१२–१३

*अतएव चेद्गुणीभूतस्य सुराज्यमूलस्य प्रधानसाधनीभूतस्य शास्तुः संग्रहणं प्रथमः कल्पस्तद्रक्षणं संमाननञ्च द्वितीयः कल्पः –*

दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च।
राजानो वानरश्रेष्ठ प्रदातारो न संशयः।।

तान्न हिंस्यान्न चाऽऽक्रोशेन्नाक्षिपेन्नाप्रियं वदेत्।

देवा मानुषरूपेण चरन्त्येते महीतले।।–४/१८/४१–४२

राजवृत्तय: –

*राज्यमूलस्य राज्ञ: प्रजारक्षणायैव प्रयोजनीयतेति निरूपयति–*

युञ्जान: स्वानिव प्राणान् प्राणैरिष्टान् सुतानिव।

नित्ययुक्त: सदा रक्षन् सर्वान् विषयवासिन:।।

प्राप्नोति शाश्वतीं राम कीर्तिं स बहुवार्षिकीम्।

ब्रह्मण: स्थानमासाद्य तत्र चापि महीयते।। –३/६/१२–१३

अन्यथा–

अधर्म: सुमहान्नाथ भवेत्तस्यतु भूपते:।

यो हरेद् बलिषड्भागं न च रक्षति पुत्रवत्।।–३/६/११

*शाश्वत कीर्तिनिदाने प्रजारक्षणप्रधाने राजधर्मे निहित चेतसो राज्ञ: स्वरूपमाह–*

साम दानं क्षमा धर्म: सत्यं धृति–पराक्रमौ।

पार्थिवानां गुणा राजन् दण्ड्यश्चाप्यपकारिषु।। –४/१७/२९

नयश्च विनयश्चोभौ यस्मिन् सत्यं च सुस्थितम्।

विक्रमश्च यथादृष्ट: स राजा देशकालवित्।। –४/१८/८

अप्रमत्तश्च यो राजा सर्वज्ञो विजितेन्द्रिय:।

कृतज्ञो धर्मशीलश्च स राजा तिष्ठते चिरम्।। –३/३३/२०

नयनाभ्यां प्रसुप्तो वा जागर्ति नयचक्षुषा।

व्यक्तक्रोध प्रसादश्च स राजा पूज्यते जनै:।। –३/३३/२१

नयश्च विनयश्चोभौ निग्रहानुग्रहावपि।

राजवृत्तिरसंकीर्णा न नृपा: कामवृत्तय:।। –४/१७/३२

प्रशस्तं शास्तारं भूय: प्रस्तौति –

विद्यास्वभिविनीतो यो राजा राजन् नयानुग:।

स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे।।–६/३५/७

अतीतानागतार्थज्ञो वर्तमानविचक्षणः।–६/१११/७०

कुलीनः सत्वसम्पन्नस्तेजस्वी चरितव्रतः।

रामः करुणवेदी च प्रजानां च हिते रतः।।

सानुक्रोशो महोत्साहः समयज्ञो दृढव्रतः।

इत्येतत् सर्वभूतानि कथयन्ति परस्परम्।।–४/७/१७–१८

न रामः कर्कशस्तावन्नाविद्वान् नाजितेन्द्रियः।

अनृतं न श्रुतं चैव नैव त्वं वक्तुमर्हसि।।–३/३७/१२

न च तीक्ष्णो हि भूतानां सर्वभूतहितेरतः।

न लुब्धो न च दुःशीलो न च क्षत्रियपांसनः।।–३/३७/९–८

प्रजानां पालनं कुर्वन्नधर्मः परिवर्जयन्।।

विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसंगरः।

स तत्र पुरुषव्याघ्रः शशाश पृथिवीमिमाम्।।

नाध्यगच्छद् विशिष्टं वा तुल्यं वा शत्रुमात्मनः।

मित्रवान्नतसामन्तः प्रतापहतकण्टकः।।–१/७/२१,२२,२३

इष्ट्वाऽनुरक्तप्रकृतिर्यः पालयति मेदिनीम्।

तस्य नन्दन्ति मित्राणि लब्ध्वाऽमृतमिवामराः।।

तद्विपरीतस्तु निन्द्यो राजा –

प्रमत्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः।

समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे।।

सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम्।

लुब्धं न बहु मन्यन्ते श्मशानाग्निमिव प्रजाः।।

स्वयं कार्याणि यः काले नानुतिष्ठति पार्थिवः।

स तु वै सह राज्येन तैश्चकार्यैर्विनश्यति।।

अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम्।

वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः।।

ये न रक्षन्ति विषयमस्वाधीनं नराधिपाः।

ते न वृद्ध्या प्रकाशन्ते गिरयः सागरे यथा।।

आत्मविद्भिर्विगृह्यत्वं देवगन्धर्व दानवैः।

अयुक्तचारश्चपलः कथं राजा भविष्यसि।।

त्वं तु बालस्वभावश्च बुद्धिहीनश्च राक्षस।

ज्ञातव्यं तन्न जानीषे कथं राजा भविष्यसि।।

येषां चाराश्च कोषश्च नयश्च जयतां वर।

अस्वाधीना नरेन्द्राणां प्राकृतैस्ते जनैः समाः।।–३/३३/२–९

तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम्।

व्यसने सर्वभूतानि नाभिधावन्ति पार्थिवम्।।

अतिमानिनमग्राह्यमात्मसंभावितं नरम्।

क्रोधनं व्यसने हन्ति स्वजनोऽपि नराधिपम्।।

नानुतिष्ठति कार्याणि भयेषु न बिभेति च।

क्षिप्रं राज्याच्च्युतो दीनस्तृणैस्तुल्यो भवेदिह।।–३/३३/१५–१७

अतो हि –

त्वं तु लब्धः प्रमत्तश्च पराधीनश्च राक्षस।

विषये स्वे समुत्पन्नं यद्भयं नावबुध्यसे।।–३/३३/१४

त्वं तु कामप्रधानश्च कोपनश्चाऽनवस्थितः।

राजवृत्तेषु संकीर्णः शरासनपरायणः।।

न तेऽस्त्यपचितिर्धर्मे नार्थे बुद्धिरवस्थिता।

इन्द्रियैः कामवृत्तः सन् कृष्यसे मनुजेश्वर।।–४/१७/३३–३४

एवं दुर्वृत्तो राजा स्वतोऽवभ्रश्यते, अपभ्रष्टश्च निन्द्यते –

त्वद्विधः कामवृत्तो हि दुःशीलः पापमन्त्रितः।

आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः।।–३/३७/७

शुष्ककाष्ठैर्भवेत्कार्यं लोष्टैरपि च पांसुभिः।

न तु स्थानात्परिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः।।

उपभुक्तं यथा वासः स्रजो वा मृदिता यथा।

एवं राज्यात्परिभ्रष्टः समर्थोऽपि निरर्थकः।।–३/३३/१८–१९

परावमन्ता विषयेषु सङ्गवान् न देश–कालप्रविभागतत्त्ववित्।

अयुक्तबुद्धिर्गुणदोषनिश्चये विपन्नराज्यो न चिराद् विपत्स्यसे।।

–३/३३/२३

## राज्यम्

रञ्जनादिति प्रजारञ्जनपरस्य राज्ञोभावः राज्यमिति व्युत्पत्त्या राजसम्बद्धस्य तद्भावधर्मकर्म समुच्चयस्य अधिष्ठानं राज्यमित्युच्यते। तदन्तर्गत एवं भूमिः, जनः, शासनपद्धतिरित्येते विद्यन्ते। अतो राज्यस्वरूपं तद्भेदाश्चात्र प्रकरणे निरूप्यन्ते। प्रसङ्गेऽत्र राज्योत्पत्तेः विषये प्राचाऽगस्त्यमुनिना श्रीरामं प्रतितत्त्वमुपदिशतायदुदीरितम्-

आसन् कृतयुगे राम ब्रह्मभूते पुरा युगे।

अपार्थिवाः प्रजाः सर्वाः (सुराणां च शतक्रतुः)।। ७/७६/३७

तर्हि शासनाभावे प्रजास्थितौ किमासीन्नियामकमित्याह –

धर्मेण शासितं सर्वं न च बाधा विधीयते।।–७/प्र० १/९

राज्योत्पत्तेः अथ कालक्रमेण जाते धर्मह्रासे शास्तुः प्रयोजनमनुभवन्त्यः प्रजाः –

ताः प्रजा देवदेवेशं राजार्थं समुपाद्रवन्।

(सुराणां स्थापितो राजा त्वया देव शतक्रतुः)

प्रयच्छास्मासु लोकेश पार्थिवं नरपुङ्गवम्।

(यस्मै पूजां प्रयुञ्जानाधूतपापाश्चरेमहि।।)

न वसामो विना राज्ञा एष नो निश्चयः परः।–७/७६/३८–४०

अक्षुपच्च ततो ब्रह्मा यतो यातः क्षुपो नृपः।

तं ब्रह्मा लोकपालानां समांशैः समयोजयत्।।–७/७६/४२

इत्यभियुक्तोक्त्या लोकपालांशत्वेन स्थापितः कोऽपिक्षुपः (तन्नामा अथवा क्षेपण–क्रियाप्रभावात्) राजपदे प्रक्षिप्तः। किन्तु तदर्थं विधिवद्दण्डधरो मनुरेव प्रथमः प्रजापतिः प्रभुराविरभूत्, इत्याह–

पुरा कृतयुगे राम मनुर्दण्डधरः प्रभुः।–७/७९/५

पुनस्ततः प्रवर्तितः आनुवंशिक उत्तराधिकारीति पुरतोऽभिधत्ते–

तस्य पुत्रो महानासीदिक्ष्वाकुः कुलनन्दनः।।

तं पुत्रं पूर्वकं राज्ये निक्षिप्य भुवि दुर्जयम्।

पृथिव्यां राजवंशानां भव कर्तेत्युवाच तम्।।

तथैव च प्रतिज्ञातं पितुः पुत्रेण राघव।

ततः परमसन्तुष्टो मनुः पुत्रमुवाच ह ।।

प्रीतोऽस्मि परमोदार कर्ता चासि न संशयः।

दण्डेन च प्रजा रक्ष मा च दण्डमकारणे।।–७/७९/५–८

एवं हि प्राक्तनानुश्रुतिमनुसृत्य संस्थापितस्य राजतन्त्रस्य रूपमाह–

इक्ष्वाकूणामियं भूमिः सशैलवनकानना।

मृगपक्षिमनुष्याणां निग्रहाऽनुग्रहेषु च ।–४/१८/६

राजतन्त्रमपि महल्लघुभेदेन द्विविधं केन्द्रितं सङ्घीभूतं चक्रवर्तित्वपदाङ्कितं लघु–लघु जनपदराज्यरूपेण विकीर्णं विभक्तं च। तत्र चक्रवर्तिराज्यम्–

यावदावर्तते चक्रं यावती च वसुन्धरा।

तावत् त्वमिह लोकस्य स्वामित्वमनुवर्तय।।–६/१२८/११

तथा हि –

अथ तत्र सहासीनास्तदा दशरथं नृपम्।।
प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्यश्च भूमिपाः।
म्लेच्छाश्चार्याश्च ये चान्ये वनशैल–निवासिनः।।
उपासांचक्रिरे सर्वे तं देवा वासवं यथा।।–२/३/२४–२६

जनपदराज्यम् –

क्षत्रियाश्च महात्मानो नाना जनपदेश्वराः।
(रामस्योपाविशन् पार्श्वे शक्रस्येव यथाऽमराः।।)

ते चास्वाधीनाः स्वाधीनाश्च –

तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः।
(चरामो वसुधां कृत्स्नां धर्मसन्तानमिच्छवः।।)

स्वाधीनं चापि जनपदराज्यम् यथा –

मिथिलाधिपतिर्वीरो जनको नाम धर्मवित्।
क्षत्रकर्मण्यभिरतो न्यायतः शास्ति मेदिनीम्।।–२/११/२७

पुनर्धर्मविधि नियन्त्रितचक्रवर्ति–जानपद पार्थिवात् भिन्नेषु राजतन्त्रेषु पुनरनियन्त्रितः एकराट् यथा –

अहं विष्णुरहं रुद्रो ब्रह्माऽहं देवराडहम्।
अहं यमश्च वरुणश्चन्द्रोऽहं रविरप्यहम्।।–७/६/६
त्रिषु लोकेषु कोऽन्योऽस्ति यो न जानाति मे बलम्।–७/१८/१०

नियन्त्रितराजतन्त्रादनियंत्रितैराष्ट्रपरकतन्त्राच्च परं निर्वचनमूलकस्य प्रजा–तन्त्रस्यापि भेदद्वयमुपलभ्यते। गणतन्त्रं जनतन्त्रं च। तत्र गणतन्त्रं गणानां निर्वाचितैः प्रतिनिधिभिः संचालितम्। जनतन्त्रं च निर्धारित योग्यताकैर्जनैः सकलैः सञ्चालितम्। तदेव संकेतयति –

इक्ष्वाकोस्तु प्रसादेन सर्वे वैशालिका नृपाः।

दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः।।–१/४७/१८

गुणसंस्कारवन्तः सुशिक्षिता एव सभ्याः सभामेत्यराजकर्तृत्वमनुभवन्ति –

समेत्य राजकर्तारः सभामीयुर्द्विजातयः।–२/६७/२

सदस्यं विशिनष्टि –

नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः।

सदस्यास्तस्य वै राज्ञो नावादकुशलो द्विजः।।–१/१४/२१

पूर्वं संघराज्यस्य रूपमखण्डं प्रदर्श्य चक्रवर्तिपदे सम्मिलित संघीयसत्वमुपपाद्य पुनः संघसंहतानां अन्तर्विषये स्वायत्तानां राज्यानां निर्देश उपन्यस्यते –

(यावदावर्तते चक्रं तावती मे वसुन्धरा।।)

द्राविडाः सिन्धु–सौवीराः सौराष्ट्रा दक्षिणापथाः।

वङ्गाङ्गमगधा मत्स्या समृद्धाः काशि–कोसलाः।।–२/१०/३६–३७

अथ पुनः परस्परं सौहृद्–दौहृदव्यवहारतो मित्रशत्रुतटस्थराज्यभेदानाह –

सौहृदाज्जायते मित्रमपकारोऽरिलक्षणम्।–६/१२७/४७

मित्रराज्यं यथा सम्बन्धिनाऽधिकृतम् –

पुत्रः केकयराजस्य साक्षाद् भरतमातुलः।।

केकयाधिपती राजा स्नेहात्कुशलमब्रवीत्।।–१/७३/२–३

इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः।

नाम्ना दशरथो राजा श्रीमान् सत्यप्रतिश्रवः।।

अङ्गराजेन सख्यं च तस्य राज्ञो भविष्यति।–१/११/२–३

कुलमित्रराज्यम् –

स तं पितृसखं मत्वा पूजयामास राघवः।

स तस्य कुलमव्यग्रमथ पप्रच्छनाम च।।

जटायुरिति मां विद्धि श्येनीपुत्रमरिन्दम।।

सोऽहं वास सहायस्ते भविष्यामि यदिच्छसि।–३/१४/४, ३३–३४

स्थापित राज्यम् –

स्वराज्ये वस लङ्कायां मया दत्ते विभीषण।

न त्वां धर्षयितुं शक्ता सेन्द्रा अपि दिवौकस:।।–६/१२२/६

सुग्रीवश्च कृतो राज्ये निहत्यवालिनं रणे।–६/१००/५१

शत्रुराज्यम् –

रावणावरज: कश्चित् खरो नामेह राक्षस:।

उत्पाट्य तापसान् सर्वाञ्जनस्थाननिवासिन:।

त्वं यदाप्रभृति ह्यस्मिन्नाश्रमे तात वर्तसे।

तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसम्।।–२/११६/११,१३

कस्य चित्वथ कालस्य सांकाश्यादागत:पुरात्।

सुधन्वा वीर्यवान् राजा मिथिलामवरोधक:।।

निहत्य तं मुनिश्रेष्ठ सुधन्वानं नराधिपम्।

(सांकाश्ये भ्रातरं सूरमभ्यषिञ्चं कुशध्वजम्।।)–१/७१/१६,१९

तटस्थराज्यम् –

उभयोस्तटयो: समाक्रामकसमाक्रान्तयोर्मध्यस्थितं मध्यवर्ति राज्यं तटस्थं उदासीनतया स्थितम्, यथा रामरावणयोर्विवदमानयोर्मध्यगत: सागरविषयस्तटस्थतया समुपयुज्यते, सैन्यप्रचालने प्राप्यो मार्ग: अधिष्ठातृत्वेन सागरस्यानुमति: पूर्वमपेक्षिता–

अलं कालात्ययं कृत्वा सागरोऽयं नियुज्यताम्।

यथा सैन्येन गच्छाम पुरीम् रावणपालिताम्।।–६/१९/४०

यदा पुनः –

न च दर्शयते रूपं मन्दो रामस्य सागरः।

प्रयतेनापि रामेण यथार्हमभिपूजितः।।

न दर्शयति साम्ना मे सागरो रूपमात्मनः।

समुद्रं शोषयिष्यामि पद्भ्यां यान्तुप्लवङ्गमाः।।–६/२१/१२, २१,२२

सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान्।

अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम्।।

हरीणां तरणे राम करिष्यामि यथास्थलम्।।–६/२२/२४–२५–२९

न्यासभूतं प्रतिनिधिराज्यं, यथा–

पादुके ते पुरस्कृत्य प्रशासन्तं वसुन्धराम्।–६/१२५/३२

अवेक्ष्यतां भवान् कोशं कोष्ठागारं गृहं बलम्।

भवतस्तेजसा सर्वं कृतं दशगुणं मया।।–६/१२७/५७

न्यासभूतमिदं राज्यं तव निर्यातयाम्यहम्।–४/१०/९

अविभक्तं राज्यं द्वैधशासनम्, यथा –

ब्रूहि गच्छ दशग्रीवं पुरीं राज्यं च यन्मम।।

अविभक्तं त्वया सार्धं राज्यं यच्चापि मे वसु।।–७/११/३३–३४

द्वैधराज्यं सततं विपद्यमानमिति स्वतंत्रकं राज्यमेव श्रेयःप्रदमिति –

तस्माद्गच्छ महावाहो कैलासं धरणीधरम्।

निवेशय निवासार्थं त्यक्त्वा लङ्कां सहानुगः।।

न हि क्षमं तवानेन वैरं धनदरक्षसा।।–७/११/४१,४४

राज्यं कतमप्रकारकमपि भवतु किन्तु तत्र बलं, कोशः, दुर्ग (सुरक्षिता राजधानी) जनपदं (शासितप्रदेशश्चेत्येतानि राज्याङ्गमूलानि) सर्वथा सर्वैः सुरक्ष्याणि भवन्तीति तस्य बृहच्छिद्रस्य राज्यस्य दुरारक्ष्यता लक्ष्यते–

अप्रमत्ते बले कोशे दुर्गे जनपदे तथा।
भवेथा गुह राज्यं हि दुरारक्ष्यतमं मतम्।।–२/५२/७२
राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर।
न चातिप्रतिकूलेन नाविनीतेन राक्षस।।
वारिवेगेन महता भिन्नः सेतुरिव क्षरम्।
दुर्बन्धनमिदं मन्ये राज्यच्छिद्रमसंवृतम्।

अतो हि –

प्रजा च परिपाल्या हि क्षत्रधर्मेण राघव । – ७/७२/१४

अन्यथा –

राजदोषैर्विपद्यन्ते प्रजाह्यविधिपालिता । –७/७३/१६

यतो हि –

अधीतस्य च तप्तस्य कर्मणः सुकृतस्य च
षष्ठं भजति भागं तु प्रजा धर्मेण पालयन् ।। – ७/७४/३१

एवं हि राज्यस्य राज्ञश्चैकरूपता सिद्ध्यति –

न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः ।
तद् वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ।। – २/३७/२९
धर्मः शुभं वा पापं वा राजमूलं प्रवर्तते ।। – ३/५०/१०

## राजचर्या

*धर्मकामार्थतत्त्वज्ञः (२/१/२२) इति विशेषविशिष्टस्य राज्ञः पुरुषार्थ–सम्पादिनी राजचर्या प्रश्नमुखेन निवेशयति–*

कच्चिन्निद्रावशं नैषि कच्चित्कालेऽवबुध्यसे।

कच्चिच्चापररात्रेषु चिन्तयस्यर्थनैपुणम्।।

कच्चिदर्थं विनिश्चित्य लघुमूलं महोदयम्।

क्षिप्रमारभसे कर्म न दीर्घयसि राघव ।।–२/१००/१७,१९

यथायथं त्रिवर्गसाधनं वाञ्छनीयम्—

कच्चिदर्थेन वा धर्ममर्थं धर्मेण वा पुनः।

उभौ वा प्रीतिलोभेन कामेन च विबाधसे।।

कच्चिदर्थं च कामं च धर्मं च जयतां वर।

विभज्य काले कालज्ञ सर्वान् वरद सेवसे।।

कच्चिन्न सर्वे कर्मान्ताः प्रत्यक्षास्ते विशङ्कया।

सर्वे वा पुनरुत्सृष्टा मध्यमेवात्र कारणम्।।–२/१००/६२,६३,५२

कृतस्य कर्तव्यस्य च कर्मणः परैरवेदनीयतां जिज्ञासते—

कच्चिन्नु सुकृतान्येव कृतरूपाणि वा पुनः।

विदुस्ते सर्वकार्याणि न कर्तव्यानि पार्थिवाः।।–२/१००/२०

आसज्जनीया राजगुणाः —

दश–पञ्च–चतुर्वर्गान् सप्त पञ्च च तत्वतः।

अष्टवर्गं त्रिवर्गं वा विद्यास्तिस्रश्च राघव।।

इन्द्रियाणां जयं बुद्ध्या षाड्गुण्यं दैव–मानुषम्।

कृत्यं विंशतिवर्गं च तथा प्रकृतिमण्डलम्।।

यात्रा दण्ड विधानं च द्वियोनी सन्धिविग्रहौ।

कच्चिदेतान् महाप्राज्ञ यथावदनुमन्यसे।।–२/१००/६७–७०

साम दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ।

पार्थिवानां गुणा राजन् दण्डश्चाप्यपराधिषु।।–४/१७/२९

वर्जनीया राजदोषाः —

नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम्।

अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम्।।
एकचिन्तनमर्थानामनर्थज्ञैश्च मंत्रणम्।
निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम्।।
मङ्गलाद्यप्रयोगं च प्रत्युत्थानं च सर्वतः।
कच्चित्त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश।।–२/१००/६५–६७

यतः –

राजदोषैर्विपद्यन्ते प्रजाह्यविधिपालिताः।–७/७६/१६

अतः प्रजारक्षणमेव मुख्यतो राज्ञः प्रयोजनीयता–

युञ्जानः स्वानिव प्राणान् प्राणैरिष्टान् सुतानिव।
नित्ययुक्तः सदा रक्षन् सर्वान् विषयवासिनः।।
प्राप्नोति शाश्वतीं राम कीर्तिं स बहुवार्षिकीम्।–३/६/१२–१३

*प्रयोजनमेतद् वोढुं यथाकालं यथास्थानं क्रियाविभागमनुष्ठितां निष्ठावतां राज्ञामाचारं विवेचयति –*

कच्चिदर्थं च कामं च धर्मं च जयतां वर।
विभज्यकाले कालज्ञः सर्वान् वरद सेवसे।।–२/१००/६३

कालविभागं दिनचर्योपक्रमेण प्रदर्शयति–

कच्चिन्निद्रावशं नैषि कच्चित्काले प्रबुध्यसे।
कच्चिच्चापररात्रेषु चिन्तयस्यर्थ नैपुणम्।।–२/१००/१७
पूर्वाह्णे धर्मकार्याणि कृत्वा धर्मेण धर्मवित्।
कृतोदकः शुचिर्भूत्वा काले हुतहुताशनः।
देवागारं जगामाशु पुण्यमिक्ष्वाकुसेवितम्।।
तत्र देवान् पितॄन् विप्रानर्चयित्वा यथाविधि।–७/३७/१३–१४

ततः परम् –

वाह्य कक्षान्तरं रामो निर्जगाम जनैर्वृतः।

उपतस्थुर्महात्मानो यन्त्रिणः सपुरोहिताः।।–७/३७/१४–१५

क्षत्रियाश्च महात्मानो नानाजनपदेश्वराः।

रामस्योपाविशन् पार्श्वे शक्रस्येव यथापराः।।–७/३७/१६

इमा हि ते परिषदो ज्ञातयश्च नृपास्तथा।

एषु तात चरन् धर्मं नातिवर्तेः सतां गतिम्।।–२/१११/५

तथा हि –

राजधर्मानवेक्षन्वै ब्राह्मणैर्नैगमैः सह।

मन्त्रिभिर्व्यवहारज्ञैस्तथाऽन्यैर्धर्मपाठकैः।

नीतिज्ञैरथसभ्यैश्च राजभिः सा समा वृता।।

अथ रामोऽब्रवीत्तत्र लक्ष्मणं शुभलक्षणम्।

कार्यार्थिनश्च सौमित्रे व्याहर्तुं त्वमुपाक्रम।।–७/१प्र०/२,३,५,६

एवमास्ते महाबाहुरहन्यहनि राघव।

प्रशासत् सर्वकार्याणि पौर–जानपदेषु च।।

शेषं दिवसभागार्धमन्तःपुरगतो भवेत्।।

पौरकार्यस्य नित्यताऽभावे–

पौरकार्याणि यो राजा न करोति दिने–दिने।

संवृते नरके घोरे पतितो नात्र संशयः।।

कार्यार्थिनां विमर्दो हि राज्ञां दोषाय कल्पते।

एवं हि –

स्वयं कार्याणि यः काले नानुतिष्ठति पार्थिवः।

स तु वै सह राज्येन तैश्च कार्यैर्विनश्यति।।–३/३३/४

न्यायपरेण राज्ञा अन्यायपथवर्ती पुत्रोऽपि निर्वासनीयो भवति –

असमञ्जो गृहीत्वा तु क्रीडत: पथि दारकान्।

सरय्वां प्रक्षिपन्नप्सु रमते तेन दुर्मति:।

स तासां वचनं श्रुत्वा प्रकृतीनां नराधिप:।

तं यानं शीघ्रमारोप्य सभार्यं सपरिच्छदम्।

यावज्जीवं विवास्योऽयमिति तानन्वशात् पिता।।—२ / ३६ / १९,२३—२४

राष्ट्रधर्मशीलो हि राजा राज्यमूलमितरेपि च तदङ्गानि —

मूलं ह्येषमनुष्याणां धर्मसारो महाद्युति:।

पुष्प फलं च पत्रं च शाखाश्चास्येतरे जना:।।—२ / ३३ / १५

राज्ञो वास्तविकं साफल्यं प्रजामुखेनावगम्यते, तथाहि —

ईदृशो नश्चिरं राज्ञा भवेदिति नरेश्वर:।

कथयन्ति पुरे राजन् पौरजानपदास्तथा।

एता वाच: सुमधुरा भरतेन समीरिता:।

श्रुत्वा रामो मुदा युक्तो बभूव नृपसत्तम:।।—७ / ४१ / २१,२२

एवं हि शीलवतो राजनायकस्य चरितमुपश्लोकयितुं कविरप्युपयुज्यते —

रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम।

धर्मात्मनो भगवतो लोके रामस्य धीमत:।।

कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम्।।—१ / २ / ३२,३६

## राजकीय संस्कार—प्रक्रिया —

तत्र प्रथमस्तु राज्याभिषेक:। तदर्थं योग्यपात्रतां निरूपयति —

तदेवं वृत्रसम्पन्नमप्रधृष्यपराक्रमम्।

लोकनाथोपमं नाथमकामयत मेदिनी।।२ / १ / ३४

आशंसते जन: सर्वो राष्ट्रे पुरवरे तथा।

आभ्यन्तरश्च बाह्यश्च पौरजानपदो जन:।।—२ / २ / ५१

तदुपयुक्त समय निर्धारणम् —

चैत्रः श्रीमानयं मासः पुण्यः पुष्पित काननः।

यो वै राज्याय रामस्य सर्वमेवोपकल्प्यताम्।।–२/३/४

अद्य चन्द्रोऽभ्युपगमत् पुष्यात्पूर्वं पुनर्वसुम्।

श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः।।–२/४/२१

श्व एव पुष्यो भविता श्वोऽभिषेच्यस्तु मे सुतः।।–२/४/२

उदिते विमले सूर्ये पुष्येचाभ्यागतेऽह्नि।

लग्ने कर्कटके प्राप्ते जन्म रामस्य च स्थिते।।–२/१५/३

स्थान निर्देशः –

उपस्थाप्यत प्रातरग्न्यागारे महीपतेः।

कृत्यक्रमः –

सत्कृत्य द्विजमुख्यानां श्वः प्रभावे महीयताम्।

कृतं दधि च लाजाश्च दक्षिणाश्चापि पुष्कलाः।।

सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम्।

ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च।।–२/३/१५,१६

पूर्वकृत्यम् –

तस्मात्वयाद्यप्रभृति निशेयं नियतात्मना।

सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना।।

यानि यान्यत्र योग्यानि श्वोभाविन्यभिषेचने।

तानि ते मङ्गलान्यद्य वैदेह्याश्चापि कारय।।–२/४/२३,३७

रक्षाविधानम् –

सुहृदश्चाप्रमत्तास्त्वां रक्षन्त्वद्य समन्ततः।

भवन्ति बहुविघ्नानि कार्यादेवंविधानि च।।–२/४/२४

कृत्यान्याह –

गते पुरोहिते रामः स्नातो नियतमानसः।

सह पत्न्या विशालाक्ष्या नारायणमुपागमत्।

प्रगृह्य सिरसा पात्रीं हविषो विधिवत्ततः।

महते दैवतायाज्यं जुहाव ज्वलिताऽनले।।

शेषं च हविषस्तस्य प्राश्याशास्यात्मनः प्रियम्।

ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे।।

वाग्यतः सह वैदेह्या भूत्वा नियतमानसः।

श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः।।–२/६/१–४

अभिषेकविधिः –

अभिषेकाय रामस्य द्विजेन्द्रैरभिकल्पितम्।

काञ्चना जलकुम्भाश्च भद्रपीठं स्वलंकृतम्।।–२/१५/४

ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह।

रामं रत्नमयं पीठे ससीतं संन्यवेशयत्।।–६/१२८/५१

अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना।

सलिलेन सहस्राक्षं वसवो वासवं यथा।।–६/१२८/६१

ऋत्विग्भिः ब्राह्मणैः पर्वं कन्याभिर्मन्त्रिभिस्तथा।

योधैश्चैवाऽभ्यषिञ्चस्ते सम्प्रहृष्टैः सनैगमैः।।–६/१२८/६२

किरीटेन ततः पश्चात् वसिष्ठेन महात्मना।

ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः।।–६/१२८/६७

प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरो गणाः।

अभिषेकेतदर्हस्य तदा रामस्य धीमतः।।–६/१२८/७१,७२

ततः पुरस्कार वितरणम्–

यथार्हं पूजिताः सर्वे कामैः रत्नैश्च पुष्कलैः।

प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम्।।–६/१२८/८६

अभिषिक्तस्य दीक्षान्तप्रबोधनम् –

*अथ पुनरभिषिक्तस्य राज्यं प्रति कर्तव्यं निर्दिश्यते–*

मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि।

प्रजा हि परिपाल्या हि क्षत्रधर्मेण राघव।।

दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर।–७/७४/३३

नित्ययुक्तः सदा रक्षन् सर्वान् विषयवासिनः।–३/६/१२

राजात्वशासत् पापस्य तदवाप्नोति किल्विषम्।।–४/१८/३२

## राजधानी –

आकार–प्रकार –

आयता दश च द्वे च योजनानि महापुरी।

श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा।।

राजमार्गेण महता सुविभक्तेन शोभिता।

मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः।।–१/५/७,८

प्रकारः –

कपाटतोरणवतीं सुविभक्तान्तरापणाम्।

सर्वयन्त्रायुधवतीमुषितां सर्वशिल्पिभिः।।

दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम्।

वाजिवारणसम्पूर्णां गोभिरुष्ट्रैः खरैस्तथा।। –१/५/१०,१३

सा पुरी गोपुरैरुच्चैः पाण्डुराम्बुदसन्निभैः। –६/३९/२०

सिंह व्याघ्र वराहाणामत्तानां नदतां तथा।

हन्तारो निशितैः शस्त्रैर्बलाद् बाहुबलैरपि।।

तादृशानां सहस्रैस्तामभिपूर्णां महारथैः। –१/५/२१,२२

राजपुरीं पुनर्विशिनष्टि –

रम्यचत्वर संस्थानां सुविभक्तमहापथाम्।

हर्म्यप्रासादसम्पन्नां सर्वरत्नविभूषिताम्।
गजाश्वरथसंबाधां तूर्यनादनिनादिताम्।
सर्वकल्याणसम्पूर्णां समाजोत्सवशालिनीम्
सुखिता विचरष्यन्ति राजधानी पितुर्मम ।–२/८६/१९,२०,२१

राजप्रासादाः –

यस्यां स्तम्भसहस्रेण प्रासादः समलङ्कृतः।
कैलासशिखराकारो दृश्यते खमिवोल्लिखन्।। ६/३१/२२
प्रासादै रत्नविकृतैः पर्वतैरिव शोभिताम्।
कूटागारैश्च सम्पूर्णामिन्द्रस्येवामरावतीम् ।।१/५/१५

राज्यप्रधानस्य भवनम् –

सितमेघनिभं चाऽपि राजवेश्म सुतोरणम्।
शुक्लमाल्यकृताकारं दिव्यगन्धसमुक्षितम्।।–२/१९/३३
चैत्यः स राक्षसेन्द्रस्य बभूव पुरभूषणम्।
शतेन रक्षसां नित्यं यः समग्रेण रक्ष्यते।।–६/३१/२३

*राजधान्याः सर्वसम्पन्नतां राजसामन्तभवननिवेशनां वाणिज्यशिल्प प्रतिपन्नतां सुरक्षितां च विशिष्य बोधयति–*

सूतमागधसम्बाधां श्रीमतामतुलप्रभाम्।
उच्चाट्टालध्वजवतीं शतघ्नीशतसङ्कुलाम्।।
वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम्।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम्।।
सामन्तराजसंघैश्च बलिकर्मभिरावृताम्।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम्।।
चित्रामष्टपदाकारां वरनारीगणायुताम्।
सर्वरत्नसमाकीर्णां विमानगृहशोभिताम्।।
गृहगाढामविच्छिद्रां समभूमौ निवेशिताम्।

शालितण्डुलसम्पूर्णामिक्षुकाण्डरसोदकाम्।

पुरीमावासयामास राजा दशरथस्तदा।।१/५/११,१२,१४,१६,१७,२२

## दुर्गम् –

*यावतः शासनतन्त्रस्य निवेश–परिवेश–सुरक्षार्थं सर्वथोपयुक्तं रिपुरोधनिरोधक स्थानं दुर्गमभिहितम् तच्च चतुर्विधमाहुः प्राञ्चो नीतिविदः। तदाह–*

नादेयं पार्वतं वान्यं कृत्रिमं च चतुर्विधम्।।–६/३०/२०

*नादेयं नदीवेष्टितम्, पार्वतं पर्वतान्तर्वर्ति (शैलाग्रे रचिता दुर्गा–६/३/२२) इति तदन्तर्वर्तितया दुष्प्रवेशं, वान्यं वनवेष्टितं, कृत्रिमं पाषाणेष्टकादिनिर्मितमिति चतुष्प्रकारकम्। तदतिरिक्तमपि अकृत्रिमं दुष्पार सागरमध्यस्थितं दुर्गं भवतीत्याह–*

लङ्कापुनर्निरालम्बा देव दुर्गा भयावहा।

स्थिता पारे समुद्रस्य दूरपारस्य राघव।।

नौपथश्चापि नास्त्यत्र निरुद्देशश्च सर्वतः।।–६/३/२०–२१

राज्ञा नैकानि उपयुक्तवस्तुसमञ्चितानि दुर्गाणि समाकलनीयानि–

कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः।

यन्त्रैश्च परिपूर्णानि तथाशिल्पिधनुर्धरैः।।–२/१००/५३

दुर्गद्वाराणि –

दृढ़बद्धकपाटानि महापरिघवन्ति च।

चत्वारि विपुलान्यस्या द्वाराणि सुमहान्ति च।।

तत्रेपूपलयन्त्राणि बलवन्ति महान्ति च।

आगतं प्रतिसैन्यं तैस्तत्र प्रतिनिवार्यते।।

द्वारेषु संस्कृता भीमाः कालायसमयाः सिताः।

शतशो रचिता वीरैः शतघ्न्यो रक्षसां गणैः।।

सौवर्णस्तु महांस्तस्याः प्राकारो दुष्प्रधर्षणः।।–६/३/११–१३,१४

परिखा –

सर्वतश्च महाभीमाः शीततोय महाशुभाः।

अगाधा ग्राहवन्त्यश्च परिखा मीनसेविता ।। –६/३/१५

संक्रमाः –

द्वारेषु तासां चत्वारः संक्रमाः परमायताः।
यन्त्रैरुपेता बहुभिर्महद्भिर्गृहपंक्तिभिः।।
त्रायन्ते संक्रमस्तत्र परसैन्यागते सति।
यन्त्रैस्तैरवकीर्यन्ते परिखासु समन्ततः।।–६/३/१६–१७

दुर्ग द्वाररक्षार्थ स्कन्धविभागपूर्वकं सैन्यनिवेशं निर्दिशति–

अयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम्।
शूलहस्ता दुराधर्षाः सर्वे खड्गाग्रयोधिनः।।
नियुतं रक्षसामत्र दक्षिणद्वारमाश्रितम्।
चर्मखड्गधराः सर्वे तथा सर्वास्त्रकोविदाः।।
न्यर्बुदं रक्षसामत्र उत्तरद्वारमाश्रितम्।
रथिनश्चाश्ववाहाश्च कुलपुत्राः सुपूजिताः।।
शतशोऽथ सहस्राणि मध्यमं स्कन्धमाश्रिताः।
यातुधाना दुराधर्षा साग्रकोटिश्च रक्षसाम्।।–६/३/२४–२८

सुरक्षितस्य दुर्गस्य दुष्प्रवेश्यतां दर्शयति–

देवदानवयक्षाणां गन्धर्वोरगरक्षसाम्।
अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम्।।
प्रविष्टः सत्वमाश्रित्य जीवन् को नाम निष्क्रमेत।
को विशेत् सुदुराधर्षां राक्षसैश्च सुरक्षिताम्।।–६/११,५

दुर्गदृढां पुरीमेवावसेदित्याह –

वीरैरध्युषितां पूर्वमस्माकं तातपूर्वकैः।
सत्यनामां दुराधर्षां हस्त्यश्वरथसङ्कुलाम्।।–२/१००/४०

*सत्यनामानि योद्धुमशक्याम् अयोध्यामिति यथार्थनाम्नीमिति भावः।*

राजधान्यामुत्सवादि प्रसङ्गः –

*राजकीयोत्सवादि प्रसङ्गे राष्ट्राध्यक्षादिबहुमानजनानामातिथ्यादिप्रसरे च शोभाप्रकारः*

अन्तःपुरस्यद्वाराणि सर्वस्य नगरस्य च ।

चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः।।

आबध्यन्तां पताकाश्च राजमार्गश्च सज्यताम्।

सर्वे च तालापचरा गणिकाश्च स्वलङ्कताः।।

उपस्थापयितव्याः स्युर्माल्ययोग्याः पृथक्–पृथक्।

दीर्घासिबद्धगोधाश्च सन्नद्धा मृष्टवाससः।।

महाराजाङ्गनं शूराः प्रविशन्तु महोदयम्।–२/३/१३,१७,१९,२०

वादित्राणि च सर्वाणि वन्दिनश्च तथा परे।।–२/१५/१२

उत्सवादिक्रियाहेतोः स्थानपरिष्कारः –

बभूव हि समा भूमिः समन्तात् पञ्चयोजनम्।

शाद्वलैर्बहुभिश्छन्ना नीलवैदूर्यसन्निभैः।।–२/९१/२९

शोभायात्रा प्रसङ्गे –

*सुवेशाः शुद्धवसनास्ताम्रमृष्टानुलेपनाः।*

सर्वे ते विमलैर्यानैः शनैर्भरतमन्वयुः।।–३/८३/१७

विविधान्यपि यानानि महान्त्यपि लघूनि च।

प्रययुः सुमहार्हाणि पादैरपि पदातयः।।–२/९२/३५

प्रयाताश्चार्य संघाता रामं द्रष्टुं सलक्ष्मणम्।

तस्यैव च कथाश्चित्राः कुर्वाणा हृष्टमानसाः।।–२/८३/७

हिरण्यं च सुवर्णं च वासांसि विविधानि च।

प्रकिन्तो जना मार्गे नृपतेरग्रतोययुः।।–२/७६/१५

राष्ट्राध्यक्षाणां निमंत्रणं स्वागतं च –

*आतिथ्यप्रसङ्गतो राष्ट्राध्यक्षाणां सौहृदवर्धनाय निमंत्रणप्रक्रिया–*

ततः सुमन्त्रमाहूय वसिष्ठो वाक्यमब्रवीत्।

निमन्त्रयस्व नृपतीन् पृथिव्यां ये च धार्मिकाः।।–१/१३/१९/२०

प्राचीनान् सिन्धुसौवीरान् सौराष्ट्रे यांश्च पार्थिवान्।

दाक्षिणात्यान् नरेन्द्रांश्च समस्तानानस्व ह।

सन्तिस्निग्धाश्च ये चान्ये राजानः पृथिवीतले।

तानानय यथाक्षिप्रं सानुगान् सहबान्धवान्।।–१/१३/२७–२८,२९

आत्मीयतापूर्वकमामन्त्रितानां शासनाधिकारिणां समानयनसमुदाचारः –

स्वयमेव हि धर्मात्मा प्रयातो मुनिशासनात्।

सुमन्त्रस्त्वरितो भूत्वा समानेतुं महामतिः।।–१/१३/३१

तथाहि –

मिथिलाधिपतिं शूरं जनकं सत्यवादिनम्।

तामानय महाभागं स्वयमेव सुसत्कृतम्।

तथाकाशीपतिं स्निग्धं सततं प्रियवादिनम्।

सद्वृत्तं देवसंकाशं सममेवानयस्व ह।।

तथा केकयराजानं वृद्धं परमधार्मिकम्।

अङ्गेश्वरं महेष्वासं रोमपादं सुसत्कृतम्।

तथा कोशलराजानं भानुमन्तं सुसत्कृतम्।

मगधाधिपतिंशूरं सर्वशास्त्रविशारदम्।।–१/१३/२१,२२,२३,२४,२५,२६

स्वागतप्रसङ्गतः –

क्रियतां नगरं सर्वं क्षिप्रमेवस्वलङ्कृतम्।

धूपितं सिक्त–सम्पृष्टं पताकाभिरलङ्कृतम्।।–१/११/२४,२५

सहभोजिता –

प्रतिगृह्णातु वै राजन् यैः सहाश्नासि भोजनम्।–७/५९/७

आमन्त्रणप्रक्रियायां पारस्परिकता –

काले काले तु मां वीरमयोध्यामवलोकितुम्।

आगच्छ त्वं नरश्रेष्ठ गन्तास्मि च पुरं तव।।–७/७३/१५

भरतं कैकयीपुत्रमातिथ्येन न्यमन्त्रयत्।–२/९१/१

*राजकीय आतिथ्यसम्माने आमन्त्रणम् तथा तदर्थ भोजनादिव्यवस्थार्थ प्रबन्ध–पटुतापथे कञ्चन व्यवस्थापकं नियोजयति–*

आतिथ्यस्य क्रियाहेतोर्विश्वकर्माणमाह्वयत्।

आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम्।–२/९१/१३

तदर्थं परिसरवेश्मादिप्रबन्धनं विशदयति –

चतुरस्रमसंबाधं शयनासन यानवत्।

दिव्यैः सर्वरसैर्युक्तं दिव्यभोजनवस्त्रवत्।।

उपकल्पितसर्वार्थं धौतनिर्मलभाजनम्।

क्लृप्तसर्वासने श्रीमत् स्वास्तीर्णशयनोत्तमम्।।

प्रविवेश माबाहुरनुज्ञातो महर्षिणा।

वेश्म तद्रत्नसम्पूर्णं भरतः केकयीसुतः।।

अनुजग्मुश्च ते सर्वे मन्त्रिणः सपुरोहिताः।

बभूवुश्च मुदा युक्तास्तं दृष्ट्वा वेश्मसंविधिम्।।–२/९१/३४–३७

भोजनपानादिप्रकारः –

भक्ष्यं भोज्यं च चोष्यं च लेह्यं च विविधं बहु।–२/९१/२०

सुरादीनि च पेयानि मांसानि विविधानि च।।–२/९१/२१

अन्याः पिबन्तु मैरेयं सुरामन्याः सुनिष्ठिताम्।

अपराश्चोदकं शीतमीक्षुकाण्डरसोपमम्।।–२/९१/१५

## गृहविभागीय प्रकरणम् –

यौवराज्यम्–

*राजतंत्रे हि उत्तराधिकारविषये यौवराज्यपदे कुलक्रमागतरीत्या नीत्या च परम्परितया ज्येष्ठस्यैकस्यैव बाधितां निरूपयति–*

ज्येष्ठस्य राजा नित्यमुचिता हि कुलस्य नः ।–२/७९/७

न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि।

स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत्।।

तस्माज्ज्येष्ठे हि कैकेयि राज्यतन्त्राणि पार्थिवाः।–२/८/२३,२४

यथावयो हि राज्यानि प्राप्नुवन्तु नृपक्षये।–२/३५/९

तत्रापि बहुपत्नीत्वे राज्ञो ज्येष्ठायां चेज्ज्येष्ठ उपलभ्येत तर्हि स एव स्थापनीय इत्याह –

ते च ज्येष्ठासु पुत्रेषु ज्येष्ठेष्वेव न संशयः।

आसज्जन्त्यखिलं राज्यं न भ्रातृषु कदाचन।।

इक्ष्वाकूणां च सर्वेषां राजा भवति पूर्वजः।

पूर्वजे नावरः पुत्रो ज्येष्ठो राजाऽभिषिच्यते।।–२/११०/३६

तथा हि –

ज्येष्ठायामसि मे पत्न्यां सदृश्यां सदृशः सुतः।

उत्पन्नस्त्वंगुणज्येष्ठो मम रामात्मजः प्रियः।।–२/३/३९–४०

कदाचिज्ज्येष्ठस्य विकलाङ्गतया दोषवत्वेन शासनकर्मणि स्यादनर्हता तदा गुणवानितरोऽपि कनिष्ठ उत्तराधिकारितयाऽधिष्ठितव्यः –

स्थापयन्त्यनवद्याङ्गि गुणवत्स्वितरेष्वपि।।–२/८/२४

*अथ प्रजातन्त्रव्यवस्थायां उत्तराधिकारिनिर्वाचनविषये सर्वथैव गुणवान् जनप्रियः प्रजाविधेयोऽधिकारे निर्णेतव्यः –*

अद्य प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपम्।–२/४/१६

त्वया यतः प्रजाश्चेमाः स्वगुणैरनुरञ्जिता।।--२/३/४०

तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि।

कामतस्त्वं प्रकृत्यैव निर्णीतो गुणवानिति।।--२/३/४१

शरण्यः सर्वभूतानां पितुर्निर्देशपारगः।

ज्येष्ठो दशरथस्याऽपि पुत्राणां गुणवत्तरः।।--४/४/९

पुत्राभावे ज्येष्ठभ्रातुः पुत्रो यौवराज्ये नियुज्यते –

ज्येष्ठस्य हि सुतो ज्येष्ठः सदृशो विक्रमेण यः।

अङ्गदोऽयमदीनात्मा यौवराज्यस्य भाजनम्।।

वृत्तज्ञो वृत्रसम्पन्नमुदारबलविक्रमम्।

इममप्यङ्गदं वीरं यौवराज्येऽभिषेचय।।–४/२६/१३,१२

ज्येष्ठे पुत्रे अभिषिक्ते कनिष्ठानां कर्तव्यनिष्ठतामाह –

अस्मिन् कुले हि सर्वेषां ज्येष्ठो राज्येऽभिषिच्यते।

अपरे भ्रातरस्तस्मिन् प्रवर्तन्ते समाहिताः।।–२/७३/२०

कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः।

ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः।।–२/४/२६

*युवराजस्य कर्तव्यतायां प्राथम्येन पौरकार्यं राजकीय गृहकार्यमवेक्षणीयं ततः शासन–कर्मणि प्रवेष्टव्यम्–*

पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः।।

चकार रामः सर्वाणि प्रियाणि च हितानि च।

मातृभ्यां मातृकार्याणि कृत्वा परमयन्त्रितः।।

गुरूणां गुरुकार्याणि काले कालेऽन्ववैक्षत।–१/७७/२१,२२,२३

क्रमशश्च निग्रह–विग्रहावतिरिच्य संग्रहानुग्रहादिविचारे युवराजः प्रयोक्तव्यः –

कोष्ठागारायुधागारैः कृत्वा संनिचयान् बहून्।।

इष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम्।

तस्य नन्दन्ति मित्राणि लब्ध्वाऽमृतमिवामराः।।—२/३/४४—४५

विनीतत्वादि राजोचितगुणलब्धये समुपदिशति —

भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः।।

कामक्रोधसमुत्थानि त्यजस्व व्यसनानि च।

परोक्षया वर्तमाना वृत्त्या प्रत्यक्षया तथा।।

अमात्यप्रभृतीः सर्वाः प्रजाश्चैवानुरञ्जय।—२/३/४२,४३,४४,४५

राज्यभारग्रहणक्रमे प्रतीत्युत्पादकं शपथवाक्यम्—

गोब्राह्मणहितार्थाय देशस्य च हिताय च।

तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः।।—१/२६/५

यतो हि —

चातुर्वर्ण्य—हितार्थं हि कर्तव्यं राजसूनुना।

नृशंसमनृशंसं वा प्रजारक्षणकारणात्।।

पातकं वा सदोषं वा कर्तव्यं रक्षता सदा।

राज्यभारनियुक्तानामेष धर्मः सनातनः।।

तत्र च अवाप्तवयसो राज्यधुराग्रहणेऽसमर्थता—

सोऽहं कथमिमं भारं महाधुर्यसमुद्यतम्।

दम्यो हि धुरमासाद्य सहेयं केन चौजसा।।—२/७३/१६

अथ इतरेष्वपि राज्यांशाशंसिषु दायादेषु दायभागप्रदानमुदाहरति —

तक्षं तक्षशिलायां च पुष्कलं पुष्कलावते।

गन्धर्वदेशे रुचिरे गान्धारविषये च सः।।—७/१०१/११

चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम्।

अङ्गदीया पुरी रम्याऽप्यङ्गदस्य निवेशिता।।

चन्द्रकेतोश्च मल्लस्य मल्लभूम्यां निवेशिता।

चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा।।–७/१०२/६,८,९

कौशलेषु कुशं वीरमुत्तरेषु तथा लवम्।

अभिषिच्य महात्मानावुभौ रामः कुशीलवौ।–७/१०७/१७

कुशस्य नगरी रम्या विन्ध्यपर्वतरोधसि।

कुशावतीति नाम्ना सा कृता रामेण धीमता।।–७/१०८/४

श्रावस्तीति पुरी रम्या श्राविता च लवस्य ह।

(अयोध्यां विजनं कृतवान् राघवो भरतस्तथा।।)

सुबाहुं मधुरया च वैदिशे शत्रुघातिनम्।–७/१०८/५/११

गृहविरोधे उत्तिष्ठमानानां राजवंश्यानां शमनोपायप्रकारः –

न चाहं यौवराज्येन सुग्रीवेणाभिषेचितः।।

नरेन्द्रेणाभिषिक्तोस्मि रामेणाक्लृष्टकर्मणा।

स पूर्वं बद्धवैरो मां राजा दृष्ट्वा व्यतिक्रमम्।।

घातयिष्यति दण्डेन तीक्ष्णेन कृतनिश्चयः।

किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तरे।

इहैव प्रायमासिष्ये पुण्ये सागररोधसि।।

एतच्छ्रुत्वा कुमारेण युवराजेन भाषितम्।–४/५३/१७–१८,१९,२०

अभिसन्धातुमारेभे हनूमानङ्गदं वचः।–४/५४/५

त्वं समर्थतरः पित्रा युद्धे तारेय वै ध्रुवम्।

दृढं धारयितुं शक्तः कपिराज्यं यथा पिता।।

नित्यमस्थिरचित्ता हि कपयो हरिपुंगव।

नाज्ञाप्यं विषहिष्यन्ति पुत्रदारैर्विना त्वया।।

त्वां नैते ह्यनुरज्जेयुः प्रत्यक्षं प्रवदामि ते।

न त्वहं ते इमे सर्वे सामदानादिभिर्गुणैः।

दण्डेन न त्वया शक्याः सुग्रीवादपकर्षितुम्।–४/५४/८,९,१०,११

स त्वं हीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः।

तृणादपि भृशोद्विग्नः स्पन्दमानाद् भविष्यसि।।

अस्माभिस्तु गत सार्धं विनीतवदुपस्थितम्।

आनुपूर्व्यात्तु सुग्रीवो राज्ये त्वां स्थापयिष्यति।।

तस्यापत्यं च नास्त्यन्य तस्मादङ्गद गम्यताम्।—४/५४/१८,२०,२२

राज्ञी —

"कच्चित्ते सफला दाराः" इति राजनयिकजिज्ञासायां राज्ञः सहधर्मचारिणी राज्ञी युनक्ति—

तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्।

राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा।।—५/१६/५

*'पत्युर्नो यज्ञसंयोगे' इति पत्नीधर्मं सफलयन्ती सीता राममनुगता गृहे च बहिश्च सततं संगतेति सूचयति—*

सीताऽपि देवकार्याणि कृत्वा पौर्वाह्णिकानि च।

श्वश्रूणामकरोत्पूजां सर्वासामविशेषतः।

अभ्यगच्छत्ततो रामं विचित्राभरणाम्बरा।

त्रिविष्टपे सहस्राक्षमुपविष्टं यथा शची।।—७/७२/२८,२९

*राज्ञः सम्पत्तौ विपत्तौ शासकीयकार्ये, अपि च सति प्रयोजने समरस्थलेऽपि, स्वामिनः सहवर्तिता भवति कदाचिद् वाञ्छनीयेति सूचयति—*

पुरा देवासुरे युद्धे सह राजर्षिभिः पतिः।

अगच्छत् त्वामुपादाय देवराजस्य साहयकृत्।।—२/९/११

राज्ञी रक्षणीयेति संक्षेपेण—

रक्षणीया विशेषेण राजदारा महाबल।—३/५/७

व्यसनादिसम्भवनामालक्ष्य तस्याःकृते वृत्तिव्यवस्था पुरतः कर्तव्येति निबध्नाति—

कौशल्या विभृयादार्या सहस्रं मद्विधानपि।

यस्याः सहस्रं ग्रामाणां सम्प्राप्तमुपजीविनाम्।।

तदात्मभरणे चैव मम मातुस्तथैव च।

पर्याप्ता मद्विधानां च भरणाय मनस्विनी।।–२/३१/२२

## राजकीयसंस्कार प्रसङ्गः –

*उदयास्तमयं जगदिव शासकीय विधानमपि अभिषेकाद्यारभ्य अन्त्येष्ट्यन्तं राजकीय–संस्कारकर्म समारोह समन्वितं स्वराष्ट्र–परराष्ट्रप्रतिनिधिसमुपस्थितिपूर्वकमनुष्ठेयमिति अन्त्येष्टि प्रकरणमारभते। तत्र च रामायणे रघुकुलपतेर्दशरथस्य वानरपतेर्वालिनो रक्षोधिपतेः रावणस्य चान्त्येष्टि क्रियाकलापस्तुल्यकल्पा* राज सपद्धत्या व्यवहृता निर्दिश्यन्ते–

संवेश्य शयने चाग्र्ये नानारत्नपरिष्कृते।

ततो दशरथं पुत्रो विललाप सुदुःखितः।।

प्रेतकार्याणि यान्यस्य कर्तव्यानि विशांपते।

तान्यव्यग्रं महाबाहो क्रियतामविचारितम्।–२/७६/५,११

देवदारूणि चाहृत्य क्षेपयन्ति तथा परे।।

गन्धानुच्चावचाश्चान्यांस्तत्र गत्वाथ भूमिपम्।

तत्र संवेशयामासुश्चितामध्ये तमृत्विजः।।

तदा हुताशनं हुत्वा जेपुस्तस्य तदृत्विजः।

जगुश्च ते यथाशास्त्रं तत्र सामानिसामगाः।।–२/७६/१६,१७,१८

चन्दनागुरु निर्यासान् सरलं पद्मकं तथा।

पुष्पोघैः समभिच्छनां पद्ममालाभिरेव च।

आरोप्यशिविकां चैव वालिनं गतजीवितम्।

अलङ्कारैश्च विविधैर्माल्यैर्वस्त्रैश्च भूषितम्।।

आज्ञापयत्तदा राजा सुग्रीवः प्लवगेश्वरः।

और्ध्वदैहिकमार्यस्य क्रियतामनुकूलत:।।

विश्राणयन्तो रत्नानि विविधानि बहूनि च।

अग्रत: प्लवगा यान्तु शिविका तदनन्तरम्।।

राज्ञामृद्धिविशेषा हि दृश्यन्ते अपि यादृशा:।

तादृशैरिह कुर्वन्तु वानरा भर्तृसत्क्रियाम्।।–४/२५/२६,२९–३२

सौवर्णी शिविकां दिव्यामारोप्य क्षौमवाससम्।।

रावणं राक्षसाधीशमश्रुपूर्णमुखा द्विजा:।

तूर्यघोषैस्तु विविधै: स्तुवद्भिश्चाभिनन्दितम्।।–६/१११/७–८

पताकाभिश्च चित्राभि: सुमनोभिश्च चित्रिताम्।

उत्क्षिप्य शिविकां तां तु विभीषणपुरोगमा:।।

दक्षिणाभिमुखा: सर्वे गृह्यकाष्ठानि भेजिरे।–६/१११/१०९–१०

रावणं प्रयते देशे स्थाप्यते भृशदु:खिता:।।

चितां चन्दन काष्ठैश्च पद्मकोशीर चन्दनै:।

ब्राह्म्या संवर्तयामासु राङ्कवास्तरणावृताम्।।

शास्त्रदृष्टेन विधिना महर्षि विहितेन च।

लाजैरवकिरन्तिस्म वाष्पपूर्णमुखास्तथा।।–६/१११/११७,११९

ततो दशाहेऽतिगते कृतशौचो नृपात्मज:।

द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत्।।–२/७७/१

**शोकाचार: –**

न चाऽहृष्यन्नचाऽऽमोदन् वणिजो न प्रसारयन्।

न चाऽशोभन्त पण्यानि नापचन् गृहमेधिन:।।–२/४८/४

**रक्षाव्यवस्था –**

*राज्यसुरक्षार्थं यौद्धिकसाधनसहितसैन्यसन्नाहो नितरामावश्यकमिति प्रतिपादयन् तदभावे दु:स्थितिं दर्शयते –*

शून्यसंवरणारक्षामयन्त्रितहयद्विपाम्।

अनावृत पुरद्वारां राजधानीमरक्षिताम्।।

अप्रहृष्टबलां शून्यां विषमस्थामनावृताम्।

शत्रवो नाभिमन्यन्ते भक्ष्यान् विषकृतानिव।।–२/८८/२४,२५

अतएव रक्षाव्यवस्था प्रकमते –

अप्रमत्तैश्च सर्वत्र गुल्मे रक्ष्या पुरीत्वियम्।

निष्क्रमो वा प्रवेशो वा ज्ञातव्यः सर्वदैव नः।।–६/७२/१२–१३

रक्षाकवचम् –

कवचं ब्रह्मदत्तं मे यदादित्यसमप्रभम्।

देवासुरविमर्देषु न च्छिन्नं वज्रमुष्टिभिः।–६/९२/३०

संभाविते चाक्रमणे दुर्गनगरजनपदरक्षागुल्मा अवधेया–

यत्र यत्र भवेद्गुल्मस्तत्रतत्र पुनः पुनः।

सर्वतश्चाऽपि तिष्ठध्वं स्वैः स्वैः परिवृताबलैः।।–६/७२/१४

ये त्वन्तपालाः प्लवगाः शीघ्रगा व्यवसायिनः।

समानयन्तु ते शीघ्रं त्वरिताः शासनान्मम।।–४/२९/३१

यथाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनम्।

व्रजेथाऽनुष्ठितं वीर तद्वाक्य समनन्तरम्।।

दुर्गनगरप्रभृतिरक्षाव्यवस्था क्रममाह –

रावणस्तु सहामात्यो मन्त्रयित्वा विमृश्य च।

लङ्कायास्तु सदा गुप्तिं कारयामास राक्षसः।।–६/३६/१६

सेनापते यथा ते स्युः कृतविद्याश्चतुर्विधाः।

योधा नगररक्षायां तथा व्यादेष्टुमर्हति।।–६/३६/१६,२

तथा हि –

व्यादिदेश च पूर्वस्यां प्रहस्तं द्वारि राक्षसम्।

दक्षिणस्यां महावीर्यौ महापार्श्व–महोदरौ।

पश्चिमायामथ द्वारि पुत्रमिन्द्रजितं तथा।

व्यादिदेश महामायं राक्षसैर्बहुभिर्वृतम्।

उत्तरस्यां पुरद्वारि व्यादिश्य शुक–सारणौ।।

राक्षसं च विरूपाक्षं महावीर्यपराक्रमम्।

मध्यमेऽस्थापयद् गुल्मे बहुभिः सह राक्षसैः।।

विसर्जयामास ततः स मन्त्रिणो विधानमाज्ञाप्य पुरस्यपुष्कलम्।।

—६/३६/१७—२०,२२

*न केवल राजधानी नगरीमुपनगरीमपितु समन्तात् राज्यप्रदेशं रक्षद्भिः सायुधसंभारैः सुरक्षाकर्तृभिर्भाव्यमिति—*

सायुधै राक्षसैर्भीमैरभिगुप्तं समन्ततः।

लघूनां त्रासजननं पातालमिव राक्षसः।

विन्यस्तानि च योधानां बहूनि विविधानि च।

ददर्शायुधजालानि तथैव कवचानि च।

किञ्च कृतेऽपि रक्षाविधाने निश्चिन्तता सर्वथा हेया—

एवं विधानं लङ्कायां कृत्वा राक्षसपुङ्गवः।

कृतकृत्यमिवात्मानं मन्यते कालचोदितः।।—६/३६/२१

अतः मुख्येन शासनाधिकारिणा स्वयमपि रक्षाविधानं निरीक्षणीयमिति —

स्वयं चात्र गमिष्यामि मन्त्रिणस्तानुवाच ह।।—६/३६/१९

निरीक्षणादिक्रमे स्वयमपि आत्मबन्धुसुरक्षितेन प्रभुणाभाव्यमिति निर्दिशति ...

जुगोप भ्रातरं भ्राता रथमास्थाय पृष्ठतः।

ooo

# द्वितीयं व्यवस्था काण्डम्

## मन्त्रिप्रकरणम् –

'मन्त्रो विजयमूलम्' इत्युक्त्या 'मन्त्रयतीति मन्त्री' इति व्युत्पत्या च राजनीतिशास्त्रे प्रमुखतया शासकीयव्यवस्थायां –

तत्प्रयोजनीयतामुपन्यस्यति –

मन्त्रो विजयमूलं हि राज्ञां भवति राघव ।

सुसंवृतो मन्त्रिधुरैरमात्यैः शास्त्रकोविदैः।। २/१००/१६

अत्र मन्त्रिणः अमात्याश्चेत्यलम्। मन्त्रकर्मणि उभयो उपयोज्याः भवन्ति। तथाऽपि मन्त्रिणो मन्त्रणायां प्रधानाः 'आत्मसमाः' मन्तव्याः। अमात्याश्च 'अमा–सह वर्तन्ते' इति व्युत्पत्या सहकार्ये नियोजयितव्याः। तथा हि–

कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः।

कुलीनाश्चेङ्गितज्ञाश्च कृतास्ते तात मन्त्रिणः।। २/१००/१५

तत्र मन्त्रि चयने एष्टव्या गुणाः –

गुरोर्गुणगृहीताश्च प्रख्याताश्च पराक्रमे।

विदेशेष्वपि विज्ञाताः सर्वतोबुद्धिनिश्चयाः।। १/७/१७

अमात्यनियोजने पुनर्द्रष्टव्या विषयाः –

अमात्यानुपधातीतान् पितृपैतामहाञ्शुचीन्।

श्रेष्ठाञ्छ्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु।। २/१००/२६

समानतया प्रतीयमानेष्वपि मन्त्रिषु सचिवेषु पुनरपि मन्त्रिणां प्रधानतया मन्त्रणा–विषये कृत्यमुपदिशति–

एतेब्रह्मर्षिभिर्नित्यमृत्विजस्तस्य पौर्वकाः।

विद्याविनीताः ह्रीमन्तः कुशला नियतेन्द्रियाः।।

श्रीमन्तश्च महात्मानः शास्त्रज्ञाः दृढविक्रमाः।

कीर्तिमन्तः प्रणिहिता यथावचनकारिणः।

तेजः क्षमायशः प्राप्ताः स्मितपूर्वाभिभाषिणः।

क्रोधात् कामार्थ हेतोर्वा न ब्रूयुरनृतं वचः।। १/७/६–९

मन्त्र–संवरणे शक्ताः शक्ताः सूक्ष्मासु बुद्धिषु।

नीतिशास्त्र विशेषज्ञाः सततं प्रियवादिनः।। १/७/१९

"यथावचनकारिणः, दृढविक्रमाः" इति समानविशेषणभूषिता अमात्याः शासनाधिकारिणः सचिवा वा नियोज्या भवन्तीति पुनर्विशिनष्टि :

तस्यामात्या गुणैरासन्निक्ष्वाकोः सुमहात्मनः।

मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः।।

सुवाससः सुवेशाश्च ते च सर्वे शुचिव्रताः।

हितार्थाश्च नरेन्द्रस्य जाग्रतीनयचक्षुषा ।। १/७/१,१६

एतेषां नियोजने गुणात्मकता प्रशस्ता न तु केवलं संख्यात्मकतेत्याह –

सहस्राण्यपि मूर्खाणां यद्युपास्ते महीपतिः।

अथवाप्ययुतान्येव नास्ति तेषु सहायता।।

एकोप्यमात्यो मेधावी शूरोदक्षो विचक्षणः।

राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम्।। २/१००/२३–२४

संख्याप्रसङ्गे –

ननु 'एकोप्यमात्यः' इत्युक्त्या 'एक'– पदेन न संख्याव्यावृत्तिरवगन्तव्या। मन्त्रिनियोगे 'कृतास्ते तात मन्त्रिणः' 'तस्याऽमात्या इत्यादिषु बहुवचनविधानेन तेषां प्राशस्त्याधिक्य–बोधनाय 'एकोपि' इत्यत्र अपि शब्दस्यैकाधिक संख्या संग्राहकत्वात्।

'कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह' इत्यनवस्था दोषपरिहाराय तेषां मनूक्तपद्धत्या संख्या व्याख्यायते –

अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः।

शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः।।

धृष्टिर्जयन्तो विजयः सुराष्ट्रो राष्ट्रवर्धनः।

अकोपो कर्मपालश्च सुमन्त्रश्चाष्टमोऽर्थवित्।।१/७/२–३

अष्टानामपि गुणबोधिनां नाम्नां तत्तद्गुणविशिष्ट पदबोधकत्वमपि वक्ष्यमाणक्रमेण व्यज्यते–

कार्यविभागपुरस्सरमुदाहरति –

'अष्टौ बभूवुः' इति संख्यानुकूल कार्यविभागेन नियतसंख्यकान् मन्त्रिणोऽमात्यान्वा श्रेष्ठेसु कर्मसु कच्चिन्नियोजयसीत्यसंकीर्णनियोगयुक्तान् समादधत्, कानि तानि कर्माणीति विशिष्य तेषां गुणानुबन्धि कृत्यं व्यञ्जयति–

१. धनाधिकारिणः –

'कोषसंग्रहणे युक्ताः' – १/७/११

२. रक्षासैन्याधिकारिणः –

'बलस्य च परिग्रहे'– १/७/११

३. स्वराष्ट्रविषयाधिकारिणः –

'शुचीनां रक्षितारश्च नित्यंविषयवासिनाम्।–१/७/१२

४. सान्धिविग्रहिक परराष्ट्राधिकारिणः –

विदेशेष्वपि विज्ञाता सर्वतोबुद्धिनिश्चयाः।

अभितोगुणवन्तश्च न चाऽसन् गुणवर्जिताः।

सन्धिविग्रहतत्त्वज्ञाः प्रकृत्या सम्पदान्विताः।।–१/७/१७,१८

५. राजस्वाधिकारिणः –

ब्रह्मक्षत्रमहिंसन्तस्ते कोशं समपूरयन्।–१/७/१३

६. दण्डाधिकारिणः –

अहितश्चापि पुरुषं न हिंस्युरभिदूषकम्।

सुतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषस्य बलाबलम्।।–१/७/११,१३

७. व्यवहारन्यायाधिकारिणो विधिज्ञाः –

कुशला व्यवहारेषु सौहृदेषु परीक्षिताः।

प्राप्तकाले यथादण्डं धारयेयुः सुतेष्वपि।।–१/७/१०

८. सूचनादि रहस्य विभागाधिकारिणः –

तेषामविदितं किञ्चित्स्वेषु नास्ति परेषुवा।

क्रियमाणं कृतं चापि चारेणापि चिकीर्षितम्।।–१/७/९

## मन्त्रणा –

मनूक्तपद्धतिमनुसृत्य मुख्येत्वष्टविभागेषु प्रतिष्ठितैर्मन्त्रणापरैर्मन्त्रिभिः सहकारिभिर्निपुणैरमात्यैः शासनकर्मणि सहायकैः सचिवैश्च परिवृतस्य नेतुः सिद्धिमभिधत्ते –

तैः मन्त्रिभिर्मन्त्रहितेनिविष्टैर्वृतोऽनुरक्तैः कुशलैः समर्थैः।

सः पार्थिवो दीप्तिमवाप युक्तस्तेजोमयैर्गोभिरिवोदितोऽर्कः।।–१/७/२४

ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः।

उपपन्नो गुणोपेतैरन्वशासद् वसुन्धराम्।।–१/७/२०

काले धर्मार्थकामान् यः संमन्त्र्य सचिवैः सह।

निषेवतात्मवाँल्लोके न स व्यसनमाप्नुयात्।।–६/६३/१२

मन्त्रणीयानि कृत्यजातानि पुनर्निर्दिशति–

अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः।

सर्वकार्याणि संमन्त्र्य महान्त्यपि हि कारय।।–२/११२/१७

मन्त्रिणश्च यथामुख्या निश्चितार्थेषुपण्डिताः।

अमात्याश्च गुणोपेताः सर्वथा बुद्धिदर्शनाः।।–६/११/२५

सचिवादीनां व्याहारव्यवहारपद्धतिमुद्धरति –

वाक्यमप्रतिकूलं तु मृदुपूर्वं शुभं हितम्।

उपचारेण वक्तव्यो युक्तं च वसुधाधिपः।।

संपृष्टेन तु वक्तव्यं सचिवेन विपश्चिता।।

सावमर्दं तु यद्वाक्यमथवा हितमुच्यते।

नाभिनन्देत तद्राजा मानार्थी मान वर्जितम्।।––३/४०/१०,९,११

प्रज्ञाहीन सचिव–सङ्गतिं निन्दति–

गृहीतो वा न विज्ञातो भारोऽज्ञानस्य वाह्यते।

ईदृशैः सचिवैर्युक्तो मूर्खैर्दिष्ट्याः धराम्यहम्।।–६/२९/१०

यो तीक्ष्णमन्त्राः सचिवाः युज्यन्ते सह तेन वै।

विषमेषु रथाः शीघ्रं मन्दसारथयो यथा।।–३/४१/१२

तद्विकल्पे च प्रज्ञावद्भिर्मन्त्रिभिर्मन्त्रिणां मन्त्रणया निर्वहतो राज्यनायकस्य साफल्ये निर्दिशति–

सर्वकृत्यानि युष्माभिः समारब्धानि सर्वदा।

मन्त्रकर्मनियुक्तानि न जातु विफलानि मे।।–६/१२/८

मन्त्रणाप्रसङ्गे मन्त्रिकर्तव्यम्–

'स किंसखा साधु न शास्ति योऽधिपं, हितान्न यः संश्रृणुते स किंप्रभु' इत्यभियुक्तोक्तेश्लोके मन्त्रिणां कर्तव्यमाह –

नियुक्तैर्मन्त्रिभिर्वाच्यो ह्यवश्यं पार्थिवो हितम्।

अत एव भयं त्यक्त्वा ब्रवीम्यवधृतं वचः।।–४/३२/१८

तथा हि –

अमात्यैः कामवृत्तो हि राजा कापथमाश्रितः।

निग्राह्यः सर्वथा सद्भिः।–३/४१/७

निग्राह्यो नायकः "सत्यं ब्रूयात् प्रियं ब्रूयादिति न्यायेन प्रियवचनोपचारण वक्तव्यो भवति—

वाक्यमप्रतिकूलं तु मृदुपूर्वं शुभं हितम्।

उपचारेण वक्तव्यो युक्तं च वसुधाधिपः।।—३/४०/१०

विपर्यये तु तत्सर्वं व्यर्थं भवति राघव।—३/४१/९

मन्त्रणाविषये आदर्शभूतो व्याहारव्यवहारः —

अवश्यं च मया वाच्यं यद्दृष्टमथवा श्रुतम्।

सम्प्रधार्य यथान्यायं तद्भवान् कर्तुमर्हति।।—६/१०

मन्त्रणाऽनर्हा चाटुकारिणो व्याहारोपि प्रसङ्गादङ्क्यते —

ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम्।
द्विषत्पक्षमविज्ञाय नीतिवाह्यात्वबुद्धयः।।

सुमहन्नो वलं कस्माद् विषादं भजते भवान्।—६/७/१,२,३

राजन्नापदयुक्तेयमागता प्राकृताज्जनात्।

हृदि नैव त्वया कार्या त्वं वधिष्यसि राघवम्।।—६/७/२५

**मन्त्रणा —**

'कच्चितो मन्त्रितो मन्त्रः' 'मन्त्रमूलं हि विजयम्' इति प्रथयतां नीतिविदां मन्त्रणा—विषयास्तदुपयुक्ताश्च जनाः के स्युरित्याह—

मन्त्रमूलं हि विजयं प्रवदन्ति मनस्विनः।

तस्माद् वै रोचये मन्त्रं रामं प्रति महाबलाः।।—६/६/५

प्रियाप्रिये सुख—दुःखे लाभालाभे हिताहिते।

धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम्।।—६/१२/७

'कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः कृतः'

इत्यभियुक्तोक्तेर्मन्त्रणाप्रसङ्गे समस्तव्यस्तरूपेण बुधैर्मन्त्रिभिर्मित्रैश्च सह विचारविमर्शो निरूप्यते–

अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः।
सर्वकार्याणि सम्मन्त्र्य महान्त्यपि हि कारय।।–२/११२/१७

इति समस्तैर्व्यस्तैश्च मन्त्रि–मित्र–बन्धु प्रभृतिभिर्विहितोऽपि मंत्रो यथाप्रयोजनमन्यैरपि समर्थैर्मन्त्रणीयः इत्याह–

मन्त्रस्त्रिभिर्हिसंयुक्तः समर्थैर्मन्त्रनिर्णये।
मित्रैर्वाऽपि समानार्थैर्बान्धवैरपि वाऽधिकैः।।–६/६/७

त्रिभिरिति मन्त्रि–सचिवामात्यैरिति बोध्यम्।

मन्त्रणासमुद्देशानुसारि–कार्यविधान प्रसङ्गे पुनराह–

तस्मात्सुमन्त्रितं साधु भवन्तोमतिसत्तमाः।
कार्यं सम्प्रतिपद्यन्तामेतत्कृत्यं मतं मम।।–६/६/१५
कार्यसिद्धिं पुरस्कृत्य मन्त्रयत्वं विनिर्णये।–६/३७/५

मन्त्रजुषां पुंसां मन्त्रणानिर्दिष्टानां मन्त्राणां च परावरत्वप्रसङ्गे प्रस्तोति–

त्रिविधा पुरुषा लोके उत्तमाधममध्यमाः।
तेषां तु समवेतानां गुणदोषौ वदाम्यहम्।।
यथेमे पुरुषानित्यमुत्तमाधममध्यमाः।
एवं मन्त्रोऽपि विज्ञेय उत्तमाऽधममध्यमः।।–६/६/६,११

तथा हि मन्त्रणीय पुरुषाः –

सहितौ मन्त्रयित्वा यः कर्मारम्भान् प्रवर्तते।
दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम्।।
एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः।
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम्।।
गुणदोषौ न निश्चित्य त्यक्त्वा दैवव्यपाश्रयम्।

करिष्यामीति यः कार्यमुपेक्षेत् स नराधमः।।–६/६/८–१०

एवं मन्त्रप्रकारानपि परावरत्वेन विवेचयति –

ऐकमत्यभुपागत्य शास्त्रदृष्टेन चक्षुषा।

मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम्।।

वहवीरपि मतीर्गत्वा मन्त्रिणामर्थनिर्णयः।

पुनर्यत्रैकतां याति स मन्त्रो मध्यमः स्मृतः।।

अन्योन्यमतमास्थाय यत्र सम्प्रति भाष्यते।

न चैकमत्ये श्रेयोऽस्ति मन्त्रः सोऽधम उच्यते।।–६/६/१२–१४

मन्त्रणा समुद्देश :

चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम्।

जातोद्वेगोऽभवत् किञ्चित्सचिवानिदमब्रवीत्।।

मन्त्रिणः शीघ्रमायान्तु सर्वे वै सुसमाहिताः।

अयं नो मन्त्रकालो हि सम्प्राप्त इति राक्षसाः।।–६/३१/२–३

सुहृदामर्थकृच्छ्रेषु मुक्तिं बुद्धिमता सदा।

समर्थेनोपसन्देष्टुं शाश्वतीं भूतिमिच्छता।।–६/१७/३३

शासनाध्यक्षेण यथावसरं यथा प्रयोजनं समस्तैर्व्यस्तैर्वा मन्त्रिभिः साकं विचारो–विधेयः। तदाह –

मन्त्रिभिस्त्वं यथोद्दिष्टं चतुर्भिस्त्रिभिरेव वा।

कच्चित्समस्तैर्व्यस्तैर्वा मन्त्रं मन्त्रयसे बुध।।–२/१००/७१

तत्र च एकैकशश्च मन्त्रणाक्रमः :–

तस्मादेकैकशस्तावद् ब्रुवन्तु सचिवास्तव।

हेतुतो मतिसम्पन्नाः समर्थाश्च पुनस्तथा।।–६/१७/३७

मन्त्रणार्हाः –

सुग्रीवः पण्डितो नित्यं भवान् मन्त्रविचक्षणः।

उभाभ्यां सम्प्रधार्यार्थं रोचते यत्तदुच्यताम्।।–६/१९/३६

मन्त्रानर्हाः –

अहितं च हिताकारं धाष्ट्र्याज्जल्पन्ति ये नराः।

अवश्यं मन्त्रबाह्यास्ते कर्तव्याः कुलदूषकाः।।

अनभिज्ञाय शास्त्रार्थान् पुरुषाः पशुबुद्धयः।

प्रागल्भ्याद् वक्तुमिच्छन्ति मन्त्रिष्वभ्यन्तरीकृताः।।

अशास्त्रविदुषां तेषां कार्यं नाभिहितं वचः।

अर्थशास्त्रानभिज्ञानां विपुलांश्रियमिच्छताम्।।

ईदृशा मन्त्रानर्हाः एव न परिहेयाः प्रत्युत तत्सम्बद्धा अपि दूरीकरणीयाः –

त्वमेव वध्यश्च सदुर्मतिश्च स चापिवध्यो य इहानयत्वाम्।

बालं दृढं साहसिकं च योऽद्य प्रावेशयत् मन्त्रकृतां समाजे।।–६/१५/११

अथमन्त्राणामन्त्रणम् :–

भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतं चाभिधीयताम्।–६/१२/२५

वचन क्रमः –

अथ संस्कारसम्पन्नो हनूमान् सचिवोत्तमः।

उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ।।–६/१७/५०

यथाशक्ति यथोक्तं तु राक्षसस्यार्जवं प्रति।

प्रमाणं त्वं हि शेषस्य श्रुत्वा बुद्धिमतां वर।।–६/१७/६८

मन्त्रणाविषयस्य संग्राह्यता यथा –

गुणान् वापि बहून ज्ञात्वा संग्रहः क्रियतां नृप।–६/१७/४२

अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह।

गुणतः संग्रहं कुर्यात् दोषतस्तद् विसर्जयेत्। – ७/१७/४१

दोषतो विसर्जयेदिति दुष्टोमन्त्रस्त्याज्य इत्याह –

ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम्।

द्विषत्पक्षमविज्ञाय नीतिबाह्यास्त्वबुद्धयः।

सुमहन्नो बलं कस्माद् विषादं भजते भवान्।–६/७/२,३

राजन्नापदयुक्तेयमागता प्राकृताञ्जनात्।

हृदि नैव त्वया कार्या त्वं वधिष्यसि राघवम्।।–६/७/२५

तथा हि –

हितबुद्ध्या यदहितं वचः परुषमुच्यते।

परपक्षं प्रविश्यैव नैतच्छ्रोत्रगतं मम।।–६/३६/३

वीर द्वेषेण वा शङ्के पक्षपातेन वा रिपोः।

त्वयाऽहं परुषाण्युक्तो परप्रोत्साहनेन वा।।–६/३६/६

मंत्रणामुपसंहरति :–

मन्त्रयित्वा च धर्मिष्ठैः कृत्वा निश्चयमात्मनः।

दोषाणां च गुणानां च सम्प्रधार्य बलाबलम्।।

आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्त्वतः।

हितं हि तब निश्चित्य क्षयं, त्वं कतुमर्हसि।।–३/३७/२३,२४

किन्तु मन्त्रणा कार्यानुष्ठानात् प्रागेव कार्या। अन्यथा दोषप्रसङ्गः –

असंमन्त्र्य मया सार्धं तदिदं साहसं कृतम्।

एवं साहसयुक्तानि न कुर्वन्ति जनेश्वराः।।

सर्वमेतन्महाराज कृतमप्रतिमं तव।

विधीयेत सहास्माभिरादावेवास्य कर्मणः।।

यः पश्चात्पूर्वकार्याणि कर्माण्यभिचिकीर्षति।

पूर्वं चाऽपरकार्याणि स न वेद नयानयौ।।–६/१२/२९,३२

परिषद् –

मन्त्रणायां निरूपितायां प्रसङ्गतस्तदाधारभूतां परिषदं प्रस्तौति :–

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः।

हितमुद्धर्षणं चैवमुवाच प्रथितं वचः।।–२/२/१

सर्वां परिषदमित्युक्त्या व्यक्तमवगम्यते समस्तां व्यस्तां च परिषत्संस्थितिम्। तद् विविच्य विभजते।

तत्र सचिव–परिषद्–

निश्चित्य सचिवैः सार्धं यौवराज्यममन्यत।

राज्य–परिषद् –

नाना नगरवास्तव्यान् पृथग्जानपदानपि।*

समानिनाय मेदिन्यां प्रधानात् पृथिवीपतिः।–२/१/४६

तेषामवस्थानादिकं प्रसङ्गतः प्रस्तूयते–

तान्वेश्मनानाभरणैर्यथार्हं प्रतिपूजितान्।

ददर्शालङ्कृतो राजा प्रजापतिरिव प्रजाः।।

अथोपविष्टे नृपतौ तस्मिन्परपुरार्दने ।

ततः प्रविविशुः शेषा राजानो लोकसम्मताः।।

अथ राजवितीर्णेषु विविधेष्वासनेषु च।

राजानमेवाभिमुखा निषेदुर्नियता नृपाः।।–२/१/४७,४९,५०

पौर–जानपद–परिषद् :–

तस्य धर्मार्थपुरुषो भावमाज्ञाय तत्त्वतः।

---

* नानेति – अत्र नगर वास्तव्यान्, जानपदान्, प्रधानान् इति विशेष विशिष्टपदैः बाधान्तरे च राजानो लोक सम्मताः इति साभिप्राय विशेषणैः लोक प्रतिनिधीन्नवगन्तुमर्हन्ति प्रकरणविदः, रामायणकालीन नगरराज्य जनपदराज्य, लोकसम्मतं च राजतन्त्रमिति स्पष्टम् ।

ब्राह्मणा बलमुख्याश्च पौर–जानपदैः सह।।–२/२/१९

'सर्वा परिषदम्' इत्युक्त्या समवेतां परिषदं विचारनिर्णये अधिकुरुते–

स लब्धमानैर्विनयान्वितैर्नृपैः

पुरालयैर्जानपदैश्च मानवैः।

उपोपविष्टैर्नृपतिर्वृतो बभौ

सहस्रचक्षुर्भगवानिवामरैः।।–२/१/५१

तत्र पौर–जानपद–लोकसम्मतप्रधानादि संवलिते संयुक्त परिषदधिवेशने वक्तव्यमुपस्थापयति--

सोऽहं विश्राममिच्छामि पुत्रं कृत्वा प्रजाहिते।

सन्निकृष्टानिमान् सर्वाननुमान्य द्विजर्षभान्।।

यौवराज्ये नियोक्ताऽस्मि प्रातः पुरुषपुङ्गवम्।–२/२/१०,१२

स्वमतमुपस्थापयामि विचारविमर्शपूर्वकं हितमुचितं निर्णेतुं सदस्यानां ताटस्थ्येन मतमभिकांक्षति–

यदिदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम्।

भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम्।।

यद्यप्येषा मम प्रीतिर्हितमन्यद् विचिन्त्यताम्।

अन्या मध्यस्थ चिन्ता तु विमर्दाभ्यधिकोदया।।–२/२/१५–१६

एवमन्यदापि यथावसरं विचारप्रकरणे श्रेणीमुख्यानां, द्विजातिमुख्यानां नैगमानां नेतुः समीपे स्वमतप्रवर्तनाय समुपस्थितिं सूचयति–

द्विजातिमुख्यैर्धमात्मा श्रेणीमुख्यैः सनैगमैः।

माल्यमोदक हस्तैश्च मन्त्रिभिर्भरतो वृतः।।

द्विजातिमुख्याः विद्यासेविनो बुद्धिजीविनः, श्रेणीमुख्याः, व्यावसायिक–श्रमिकमुख्याः नैगमाः वाणिज्यव्यापारजीविनो जना अवगम्यन्ते। तेषां सर्वेषां प्रतिनिधयः राजनेतुः समीपे समुपतिष्ठन्ते विचारचर्चायामिति सूच्यते।

# सभा तन्नियमाश्च

मन्त्रणायां परिषदि च प्रतिपादितायां तदर्थमुचितमास्थानं सुरुचिरं साधनसम्पन्नमुदात्तं भवनपरिसरं सभाऽभिधानं निरूपयन्नाह–

आससाद महातेजा: सभां विरचितां तदा।
सुवर्णरजतास्तीर्णां विशुद्धस्फटिकान्तराम्।।–६/११/१३–१४

तामार्यगणसम्पूर्णां भरत: प्रग्रहां सभाम्।
ददर्श बुद्धिसम्पन्न: पूर्णचन्द्रां निशामिव।।–२/८२/१

सा विद्वज्जनसंपूर्णा सभा सुरुचिरा तथा।
आसनानि यथान्यायमार्याणां विशतां तदा।
वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा।।–२/८२/३,२

तत्र नायकस्य कृते परमासनम्–

तस्यां तु वैदूर्यमयं प्रियकाजिन–संवृतम्।
महत्सोपाश्रयं भेजे रावण:परमासनम्।।–६/११/१६–१७

सभायां नायकस्य प्रवेशकाले स्वागताय, तदागमनोपलक्षणाय च वाद्यध्वनिरपेक्ष्यते–

ततस्तूर्यसहस्राणां संजज्ञे नि:श्वनोमहान्।
तुमुल: शङ्खशब्दश्च सभां गच्छति रावणे।।–६/११/८–९

हेतु सूचनापूर्वकं सदस्यानामाह्वानं–

तत: शशासेश्वरवद्दूतान् लघुपराक्रमान्।।
समानयत मे क्षिप्रमिहैतान् राक्षसानिति।
कृत्यमस्तिमहज्जाने कर्तव्यमितिशत्रुभि:।।–६/११/१७–१८

सभाप्रवेशप्रकार:। परिसरे वाहनानि बहिरेवास्थाप्य पद्भिरेव प्रवेष्टव्यमिति व्यनक्ति–

ते वाहनान्यवस्थाप्य यानानि विविधानि च।
सभां पद्भि: प्रविविशु: सिंहा गिरिगुहामिव।।

ते समेत्य सभायां वै राक्षसा राजशासनात्।

यथार्हमुपतस्थुस्ते रावणं राक्षसाधिपम्।।–६/११/२२,२४

सदस्यातिरिक्तानां विचारकरणे समुपयुक्तानां विशेषज्ञानामपि केषांचित् स्थितिस्तत्रविधेयेत्याह–

मन्त्रिणश्च यथामुख्या निश्चितार्थेषु पण्डिताः।

अमात्याश्च गुणोपेताः सर्वज्ञा बुद्धिदर्शनाः।।

समीयुस्तत्र शतशः शूराश्च बहवस्तथा।

सभायां हेमवर्णायां सर्वार्थस्य सुखाय वै।।–६/११/२५,२६

सभाया नियमाः पालनीयाः सद्भिरिति सूचयति–

न चुक्रुशुर्नानृतमाहकश्चित् सभासदो नापि जजल्पुरुच्चैः।

संसिद्धितार्थाः सर्व एवोग्रवीर्या भर्त्तुः सर्वे ददृशुश्चाननं ते।।–६/११/३०

अग्रवक्ता यथा–

यज्ञस्तु प्रकृती सर्वाः स संप्रेक्ष्य च धर्मवित्।

इदं पुरोहितो वाक्यं भरतं मृदु चाब्रवीत्।।–२/८२/४

वचनप्रयोगे योग्यतमानामेव सचिवानामेकैकशो हेतुगर्भ व्याहरणम्–

तस्मादेकैकशस्तावद् ब्रुवन्तु सचिवास्तव।

हेतुतो मतिसम्पन्नाः समर्थाश्च पुनस्तथा।।–६/१७/३७

वाक्यान्तरे वक्तव्यं निषेधयति–

उत्तरं च न वक्तव्यं शूर वाक्यान्तरे मम।–७/६२/२०

धृष्टता वाग्वितण्डा च न कर्तव्येति–

प्रभवन्तं पदस्थं हि परुषं कोऽभिभाषते–६/३६/७

सभातो निर्गमे समुदाचरमाचरयति–

जयाशिषा तु राजानं वर्धयित्वा यथोचितम्।

## सर्वमतसंग्रहः*

उपस्थिते कस्मिंश्चिदात्ययिके कार्ये सर्वमत संग्रहोऽपि अपेक्ष्यते, यत्र च सर्वे नागरिकाः आकार्यन्ते--

ब्राह्मणान् क्षत्रियान् योधानमात्यान् राजवल्लभान्।

क्षिप्रमानयताव्यग्राः कृत्यमात्ययिकं हि नः ।।–२/८१/१२

तथा हि सूचनादि प्रक्रिया –

ततः शशासेश्वरवद् दूताँल्लघुपराक्रमान्।

समानयत मे क्षिप्रमिहैतान् राक्षसानिति।

कृत्यमस्ति महज्जाने कर्तव्यमिति शत्रुभिः।–६/११/१७–१८

राक्षसास्तद्वचः श्रुत्वा लङ्कायां परिचक्रमुः।

अनुगेहमवस्थाय विहारशयनेषु च।

उद्यानेषु च रक्षांसि चोदयन्तोह्यभीतवत्।।–६/११/१९

---

* प्रकीर्ण विषयाः –

द्वन्द्वे चैतत्प्रवक्तव्यम्

| | | |
|---|---|---|
| सर्वमत संग्रहः | – | Referendum |
| परिषद् | – | Assembly or Council. |
| सचिव परिषद् | – | Council of Ministers, Cabinet. |
| राज्य परिषद् | – | Council of States. |
| पौर जान परिषद् | – | House of Commons. |
| सभा सदनम् | – | Parliament House. |
| दूतः | – | Ambessedor. |
| चारः | – | Inteligence Department. |
| व्यवहारः | – | Judiciary |
| तीर्थानि | – | Officials. |
| सन्देशहरः | – | Messengers. |
| राजभृत्याः | – | Civil Servents. |
| (विनोदिनः) सहचराः | – | Personal Staff. |
| किङ्कराः | – | Attendents. |
| कार्मिकाः | – | Workers. |

समेत्य सङ्घशः सर्वे चत्वरेषु सभासु च।—२/६/२०

अप्राप्त वयस्कानां बालानामविपक्वबुद्धीनां च मताधिकारे नार्हता—

न तात मन्त्रे तव निश्चयोऽस्ति।

बालस्त्वमद्याप्यि विपक्वबुद्धिः।— ६/१५/९

अन्येषाम् केषांचिन्मतानर्हतां निरूपयति—

मूढ़ोऽप्रगल्भोऽविनयोपपन्नः

तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा।—६/१५/१२

## अथ राजदूतप्रकरणम्

शासकीयदूतस्य प्रयोजनीयतां श्रीराम द्वारा भरतं प्रति प्रश्नमुखेन प्रथयति—

कच्चिज्जानपदो विद्वान् दक्षिणः प्रतिभानवान्।

यथोक्तवादी दूतस्ते कृतो भरत पण्डितः।।—२/१००/३५

इत्युक्त्या दूतो जनपदः स्वविषयवासी न तु परविषयजन्यो दाक्षिण्ययुक्तः सप्रतिभः सदसद्विवेकवान् पण्डितः स्यात् तस्य तु मुख्यतया सन्देशनिवेदकत्वाद् वाक्यपाटवमपेक्ष्यते इति प्रशस्तो दूत उदाह्रियते—

प्रसन्नमुखवर्णश्च व्यक्तं दृष्टश्च भाषते।

नानृतं वक्ष्यते वीरो हनूमान् मारुतात्मजः।—४/४/३२

निन्द्यो दूतो यथा—

अर्थानर्थान्तरे बुद्धिर्निश्चिताऽपि न शोभते।

घातयन्ति हि कार्याणि दूताः पण्डितमानिनः।—५/३०/३८

भूताश्चार्था विनश्यन्ति देशकालविरोधिताः।

विक्लवं दूतमासाद्य तमः सूर्योदये यथा।।—५/३०/३७

यस्तु हित्वा मतं भर्तुः स्वमतं सम्प्रधारयेत्।

अनुक्तवादी दूतः सन् स दूतो वधमर्हति।।

दूतः सन्देशहर इति जनसामान्यप्रयोज्यः, राजकर्मणि नियुक्तस्तु राजदूतः सन्धिविग्रहादिप्रसङ्गे प्रयोजनीयता तस्य परराष्ट्रस्थित–राजप्रतिनिधिरिवसामादि प्रयोगावधारणे प्रामुख्यमवगन्तव्यमित्याह–

तव दूता महाराज क्षिप्रमर्हन्ति वेदितुम्।
उपप्रदानं सान्त्वं वा भेदो वाऽथ प्रयुज्यताम्।–६/२०/७

दौत्यकर्मणि नियोजितस्य वाक्पाटवादिप्रौढ़त्वं मुखमुद्रादिदोषराहित्यं निर्दिशति तस्य प्रभावशालित्वं च विशिनष्टि–

बहु व्याहरताऽनेन न किञ्चिदपभाषितम्।।–४/३/२९

तथा हि–

न मुखे नेत्रयोश्चापि ललाटे च भ्रुवोस्तथा।
अन्येष्वपि च सर्वेषु दोषः संविदितः क्वचित्।।–४/३/३०
अविस्तरमसन्दिग्धमविलम्बितमव्ययम्।
उरःस्थकण्ठगं वाक्यं वर्तते मध्यमस्वरम्।
संस्कारक्रमसम्पन्नामद्रुतामविलम्बिताम्।
उच्चारयति कल्याणी वाचं हृदयहर्षिणीम्।।
अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया।
कस्य नाराध्यते चित्रमुद्यतासेरेरपि।।
एवं विधो यस्य दूतो न भवेत् पार्थिवस्यतु।
सिद्ध्यन्तीह कथं तस्य कार्याणां गतयोऽनघ।।
एवं गुणगणैर्युक्ता यस्य स्युः कार्यसाधिकाः।
तस्य सिद्ध्यन्ति सर्वेऽर्था दूतवाक्यप्रचोदिताः।।–४/३/३०–३५

सन्देशहरेण दूतेन प्रभोरभिज्ञानं स्वाभिधानापरिन्यपुरस्सरं संवादोपक्रममुदाहरति शत्रुपक्षीयेण सह–

अहं सुग्रीव संदेशादिह प्राप्तस्तवान्तिके।

राक्षसेश हरीशस्त्वां भ्राताकुशलमब्रवीत्।।–५/५१/२

मित्रपक्षीयेण सह–

अहं तु हनुमान्नाम मारुतस्यौरसः सुतः।।–५/५१/१५

प्रसङ्गतः शत्रुतो मित्रतो वा प्रहित प्रणिधिना सह राज्ञः परमुखेन केनचिन्माध्यमेन वा जिज्ञास्यं ज्ञातव्यम्–

दुरात्मा पृच्छ्यतामेषः कुतः किं वास्य कारणम्।
वनभङ्गे च कोऽस्यार्थो राक्षसानां च तर्जने।।–५/५०/५

तमभ्यभाष सौमित्रे सुग्रीवसचिवे कपिम्।–४/३/२७

रुक्षाऽपि वार्ता सन्देशहरैः साम्ना मधुरया वाचा उपस्थापनीयेत्याह–

सामोपहितया वाचा रुक्षाणि परिवर्जयन्।
वक्तुमर्हसि सुग्रीवं व्यतीतं कालपर्यये।।–४/३१/८

दण्ड्यो 'दूतो वधमर्हति' इत्युक्तम्। किन्तु तदधिकारे स्व–स्वाम्येवाधिकृतः। परराष्ट्रे सम्प्राप्तस्य कियदप्रमेयाप्रियकारिणोऽपि दूतस्य वधो न विधेयः, अन्यप्रकारको निर्वासनादि दण्ड एव विधेयोभवतीत्याह–

असंशयं शत्रुरयं प्रवृद्धःकृतं ह्यनेनाप्रियमप्रमेयम्।
न दूतवध्यां प्रवदन्ति सन्तो दूतस्य दृष्टा बहवोहि दण्डाः।
वैरूप्यमङ्गेषु कशाभिघातो मौण्ड्यं तथा लक्षणसन्निवेशः।
एतान् हि दूते प्रवदन्ति दण्डान् वधस्तु दूतस्य न नः श्रुतोऽस्ति।।
–५/५२/१४,१५

साधुर्वा यदि वाऽसाधुः परैरेष समर्पितः।
ब्रुवन् परार्थं परवान् न दूतो वधमर्हति।–५/५२/२१

सति सम्भवे प्रसङ्गेऽस्मिन् दूतप्रेषक एव शत्रुदण्डो भवति–

तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः।।–५/५२/२०

दूतस्तु–

न चेदं ग्रहणं प्राप्य भेतव्यं जीवितं प्रति।

न्यस्तशस्त्रौ गृहीतौच न दूतौ वधमर्हत:।।–६/२५/२०

प्रसङ्गत: केवल सन्देशहराणां कृतेऽपि यातायातावस्थानाद्यर्थं वाहनपाथेयादिव्यवस्था यथोचितरूपेण कार्येति सङ्केतितम्–

दत्तपथ्याशना दूता: जग्मु: स्वं स्वं निवेशनम्।

केकयांस्ते गमिष्यन्तो हयानारुह्य संमतान्।।–२/६८/१०

सामान्यत: सन्देशहराणां सन्देशवाचि यथाप्रस्तावं मर्यादा रक्षितव्येति–

मा चास्मै प्रेषितं रामं मा चास्मै पितरं मृतम्।

भवन्त: शंसिषुर्गत्वा राघवाणामित: क्षयम्।।–२/६८/८

दूतस्य कर्तव्याकर्तव्यतायां मोहप्रसङ्गे–

निवेद्यमाने दोष: स्याद् दोष: स्यादनिवेदने।

कथं तु खलु कर्तव्यं विषमं प्रतिभाति मे।।–५/१३/१८

यदि सीतामदृष्ट्वाहं वानरेन्द्रपुरीमित:।

गमिष्यामि तत: को मे पुरुषार्थो भविष्यति।।

ममेदं लङ्घनं व्यर्थं सागरस्य भविष्यति।

प्रवेशश्चैव लङ्कायां राक्षसानां च दर्शनम्।।

किं वा वक्ष्यति सुग्रीवो हरयो वाऽपि संगता:।

किष्किंधामनुसंप्राप्तं तौ वा दशरथात्मजौ।।–५/१३/२०–२२

व्यामोहेऽपि कृतकृत्यतासम्पादनाय यत्नान्तरमन्विष्य कर्तव्यता निर्धारणीया भवति–

सोऽहं नैव गमिष्यामि किष्किन्धां नगरीमित:।

नहि शक्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना।।–५/१३/३८

इति चिन्तासमापन्न: सीतामनधिगम्यताम्।

ध्यानशोकपरीतात्मा चिन्तयामास वानरः।।

यावत् सीतां न पश्यामि रामपत्नीं यशस्विनीम्।

तावदेतां पुरी लङ्कां विचिनोमि पुनः पुनः।।–५/१३/५१–५२

## अथ चार प्रकरणम्

राज्ञश्चक्षुर्भूतश्चरः, चर एव चारः। स च स्व–परविषयगत–रहस्य–ज्ञानाय सर्वतश्चरणशीलो भवति। तदुपज्ञमेव राजनये निर्धारयतो राज्ञश्चारिताऱ्थ्यमित्याह–

यस्मात्पश्यन्ति दूरस्थान् सर्वानर्थान्नराधिपः।

चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः।।–३/३३/१०

तदभावे हानिरुपलक्ष्यते–

अयुक्तचारं मन्येत्वां प्रकृतैः सचिवैर्युतः।

स्वजनं च यतः स्थानं निहतं नावबुध्यसे।।–३/३३/११

चारगुणान् वक्ति–

तानब्रवीत् ततो वाक्यं रावणो राक्षसाधिपः।

चारान् प्रत्यायिकाञ्शूरान् धीरान् विगतसाध्वसान्।।–६/२९/१८

यथावद् वृत्तमवगन्तुं चारैश्चरणस्थानान्युदाहरति–

आमानशाला विचितास्तथा पुष्पगृहाणि च।

चित्रशालास्य विचिता भूयः क्रीड़ागृहाणि च।।

निष्कुण्टान्तररथ्याश्च विमानानि च सर्वशः।

इति संचिन्त्य भूयोऽपि विचेतुमुपचक्रमे।।

भूमीगृहांश्चैत्यगृहान् गृहातिगृहकानपि।

उत्पतन् निपतंश्चापि तिष्ठन् गच्छन् पुनः क्वचित्।।–५/१२/१३–१५

वृत्तान्त परिज्ञानार्थं भूयोऽपि तद्व्यवसायो विशदीक्रियते–

सर्वमप्यवकाशं च विचचार महाकपि:।

चतुरङ्गुलमात्रोऽपि नावकाश: स विद्यते।।

रावणान्त: पुरे तस्मिन् यं कपिर्न जगाम स:।।–५/१२/१७

निरीक्षणीयानि स्थानानि पुनर्विवृणुते–

प्राकारान्तरवीथ्यश्च वेदिकाश्चैव संश्रया:।

श्वभ्राश्च पुष्करिण्यश्च सर्वं तेनाऽवलोकितम्।।–५/१२/१८

अन्वेष्टव्यानुसारेण यद्विधं स्थानं सम्भावनीयमिति प्रथयति–

यस्य सत्वस्य या योनिस्तस्यां तत्परिमार्गते।

न शक्यं प्रमदा नष्टा मृगीषु परिमार्गितुम्।।–५/११/४४

चार द्वारा शत्रुत्व–मित्रत्व ज्ञानमुपलभ्यते–

तौ त्वया प्राकृतेनैव गत्वा ज्ञेयौ प्लवंगम।

इङ्गितानां प्रकारैश्च रूपव्याभाषणेन च।–४/२/२४

पुनस्तद्द्वारा शत्रो: संस्थिति: परिज्ञेया भवतीत्याह–

कश्च राम: कथं वीर्य: किं रूप: किं पराक्रम:।

किमर्थं दण्डकारण्यं प्रविष्टश्च सुदुस्तरम्।।–३/३४/२

चारकृत्यानि नियोगमुखेनाख्याति–

इतो गच्छत रामस्य व्यवसायं परीक्षितुम् ।

मन्त्रेष्वभ्यन्तरा येऽस्य प्रीत्यातेन समागता:।।

कथं स्वपिति जागर्ति किमद्य च करिष्यति।

विज्ञाय निपुणं सर्वमागन्तव्यमशेषत:।।–६/२९/१९–२०

प्रसङ्गतश्चारस्य दुष्प्रवेशतामाह–

न ते चारयितुं शक्या राजन् वानरपुङ्गवा:।

विक्रान्ता बलवन्तश्च राघवेण च रक्षिताः।।

नापि संभाषितुं शक्या—संप्रश्नोऽत्र न लभ्यते।

सर्वतो रक्ष्यते पन्था वानरैः पर्वतोपमैः।।—६/३०/५—६

प्रवृत्तेरुपलब्धेरनन्तरम—

संतापस्य च ते स्थानं नहि पश्यामि राघव।

प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः।।—६/२/३

अन्ये दूत—चार विभेदं विवेचयति—

नाय दूतो महाप्राज्ञ चारकः प्रतिभाति मे।

तुलितं हि बलं सर्वमनेन तव तिष्ठति।।

तथा हि—

गृह्यतां मागमल्लङ्कामेतद्धि मम रोचते।।—६/२०/२९,३०

## शासनाधिकारिणः — तीर्थकाः

शासनाधिकारे नियुक्तास्तीर्थकाः। ते चेन्निजाः स्वपक्षीयाः पञ्चदशविभागीयाः, परकीयाश्च अष्टादश विभागीयास्ते यथायथं शासनाध्यक्षेण शुद्धतापरीक्षणार्थं चारद्वारा परीक्षणीयाः स्युरिति बोधयन्नाह—

कच्चिदष्टदशान्येषु स्वपक्षे दश पञ्च च।[१]

त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः।।—२/१००/३६

ते च तीर्थकाः रांज्यप्रबन्धेऽधिकृता कीदृशाःस्युरिति प्रदर्शयति—

वीराश्च नियतोत्साहा राजशास्त्रमनुष्ठिताः।

शुचीनां रक्षितारश्च नित्यं विषयवासिनाम्।।—१/७/१२

राजशास्त्रमनुष्ठितामिति शासनसंहितामाधृत्य व्यवस्थां कुर्वता तेषां साध्यसिद्धतामाह—

सम्यक् प्रणीतया नीत्या नाधर्मो विद्यते क्वचित्।

तस्माद् राजभयात्सर्वे रक्षन्तीह परस्परम्।।

भुरतस्तु महीपालो वयं त्वादेशवर्तिनः।–४/१८/२३

शासनाधिकारे नियुक्ता अधिकारिणो भ्रमणशीला भवेयुः –

तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः।

चरामो वसुधां कृत्स्नां धर्मसन्तानमिच्छवः।–४/१८/९

## राज्यभृत्यप्रकरणम्

वेतनभोगिनः स्वाम्यमात्यादि–निर्देशानुसारं यथाविधि राज्यसेवा–कर्मणि नियुक्ता भृत्याः सर्वथाऽनुशासने वर्तमानाः स्युरिति निर्वक्ति–

कच्चित्ते संभृता भृत्याः कच्चित्तिष्ठन्ति शासने।–१/५२/८

शासकीय भृत्यप्रशस्तता यथा–

न ह्यर्थास्तत्र तिष्ठन्ति न दारा न च बान्धवाः।

सुप्रीता भृत्यवर्गस्तु यत्र तिष्ठति राघव ।।–७/६४/६

योग्यतानुसारं यथोचितस्थाने भृत्या नियोजयितव्याः –

कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः।

जघन्याश्च जघन्येषु भृत्यास्ते तात योजिताः।।–२/१००/२५

उत्तममध्यमाधमश्रेणीषु तिसृषु नियोजितानि राजभृत्यानि गुणतो निर्दिशति–

यो हि भृत्यो नियुक्तः सन् भर्त्रा कर्मणि दुष्करे।

कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम्।।

यो नियुक्तः परं कार्यं न कुर्यान्नृपतेः प्रियम्।

भृत्यो युक्तः समर्थश्च तमाहुर्मध्यमं नरम्।।

नियुक्तो नृपतेः कार्यं न कुर्याद् यः समाहितः।

भृत्यो युक्तः समर्थश्च तमाहुः पुरुषाधमम्।।–६/१/७–९

सेवा नियोजन प्रसङ्गे गुणदोष पर्यालोचनमावश्यकम्–

अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह ।

गुणतः संग्रहं कुर्याद् दोषतस्तु विवर्जयेत्।।–६/१७/४१

गृहीतकार्यस्याऽपि परीक्ष्यावधि सम्यक् कार्यनिरीक्षणपूर्वकमेव ग्राह्यता—

ऋते नियोगात्सामर्थ्यमववोद्धुं न शक्यते।

सहसा विनियोगोऽपि दोषवान् प्रतिभाति मे।।—६/१७/५४

अथ नियोगदृढ़ीकरणाय—

प्रणिधाय हि चारेण यथावत् सूक्ष्मबुद्धिना।

परीक्ष्यं च ततः कार्यो यथान्यायं परिग्रहः।।—६/१७/४४

नियोजक—नियोज्ययोः पारस्परिकव्यवहारमुदाहरति—

किं कार्यं ब्रूहि भगवन् को ह्यर्थः किं करोम्यहम्। —७/१०५/४

स त्वं पुरुष शार्दूल मार्गस्व विषयं स्वकम्।

दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर।।—७/७४/३२,३३

पारस्परिकता—

सान्त्वेनानुप्रदानेन मानेन च यशस्विना।

लालिताः कपिनाथेन प्राणांस्त्यक्ष्यन्ति वानराः।।—५/१३/३३

कदाचिद् विप्रियमाचरन्नपि हितमेव प्रतिपादयन् भृत्यो भवति कृतकृत्यः —

मया तु हितकामेन यशश्च परिरक्षता।

स्नेहप्रसन्नमनसा हितमित्यप्रियं कृतम्।।—६/१०४/१२

सद्भृत्यं प्रशंसन्नाह—

त्वं हि सत्यवतः शूरो धार्मिको दृढ़विक्रमः।

परीक्ष्यकारी स्मृतिमान् विसृष्यात्मा सुहृत्सु च।।—६/१७/३६

कृतकृत्या भृत्याः सर्वर्था सत्कार्याः—

प्रीतो नाम ततो भूत्वा भृत्यानां त्वमरिन्दम।

भोगांश्च परिवारांश्च कामान् वसु च दापय।।—६२/६४/२८

तस्या तुष्टो यद्वद् राजा प्रददौ च विभूषणम्।—६/३१/१०

अहापनीया भृत्या–

भक्तं भृत्यं स्थितं स्थित्या न मां त्वं हातुमर्हसि।।–२/५२/५८

भृत्यस्यानिवार्यता, भृत्यवत्सलता च–

त्यक्ष्याम्यहं स्वकं राज्यं नाहं भृत्यैर्विना कृता।

वर्तयेयं क्षणं ब्रह्मन् समनुज्ञातुमर्हसि।।–७/८९/१६

## पारिपार्श्वकाः सहचराः*

शासनकृत्यश्रान्तस्य नेतुःकृते मनोविनोदनाय, कथाप्रसङ्गेन वृत्तजातपरिज्ञानाय च रहस्यवेदिनः पारिपार्श्वकाः सहचराः प्रयोजनीयाः –

तत्रोपविष्टं राजानमुपासन्ते विचक्षणाः।

कथानां बहुरूपाणां हास्यकाराः समन्ततः।।–७/४३/१

एते कथा बहुविधाः परिहाससमन्विताः।

कथयन्ति स्म संहृष्टा राघवस्य महात्मनः।।–७/४३/३

मुदिता नाम पार्श्वस्था बहवः समुपाविशन्।–७/३७/१८

न चैवं विचक्षणैः परिहासपेशलैः सहचरैः सह मनोरञ्जनमात्रं शासनासीनैः प्रभुभिः साधनीयमपि तु स्वकृतैः प्रकृतेषु कीदृक् प्रभाव इति तेभ्यः पौरजानपदवृत्तरहस्यमवगत्य कर्तव्यमुपयोज्यमिति समुदाहरति–

ततः कथायां कस्यांचिद् राघवः समभाषत।

---

* शासकीय समुदाचारे चान्येसम्बद्धपरिचराः –

सन्देशहरः –

यदेवं विहिते कार्ये यद्धितं पुरुषर्षभ।
तत्तद्ब्रूहि, नरश्रेष्ठ त्वर कालव्यतिक्रमः।।–४/३०/८३

अन्ये च सम्वर्धकाः –

सूताः परमसंस्काराः मागधाश्चोत्तमश्रुताः।
गायकाः श्रुतिशीलाश्च निगदन्तः पृथक् पृथक्।।

का: कथा नगरे भद्र वर्तन्ते विषयेषु च।।

मामाश्रितानि कान्याहु: पौरजानपदा जना:।।

किं च सीतां समाश्रिन्य भरतं किं च लक्ष्मणम्।

किन्नु शत्रुघ्नमुद्दिश्य कैकेयी किन्नु मातरम्।

वक्तव्यतां च राजानो वने राज्ये व्रजन्ति च।–७/४३/४,५,६

शुभाशुभानि वाक्यानि कान्याहु: पुरवासिन:।

श्रुत्वेदानी शुभं कुर्या न कुर्यामशुभानि च।।

कथयस्व च विश्रब्धो निभर्य विगत ज्वर:।–७/४३/१०–११

प्रत्युत्तरं विशदयति। तत्र शुभम्–

श‍ृणु राजन् यथा पौरा: कथयन्ति शुभाशुभम्।

चत्वरापणरथ्यासु वनेषूपवनेषु च।।

दुष्करं कृतवान् राम: समुद्रे सेतुबन्धनम्।

अश्रुतं पूर्वकै: कैश्चिद् देवैरपि सदानवै:।।

रावणश्च दुराधर्षो हत: सबलवाहन:।

वानराश्च वशं नीता ऋक्षाश्च सह राक्षसै:।–७/४३/१३,१४,१५

पुनरशुभमपि–

हत्वा च रावणं सख्ये सीतामाहृत्य राघव:।

अमर्ष पृष्ठत: कृत्वा स्ववेश्मपुनरानयत्।।

कीदृशं हृदये तस्य सीतासम्भोगजं सुखम्।

अङ्कमारोप्य तु पुरा रावणेन बलाद्धृताम्।।

लङ्कामपि पुरा नीतामशोकवाटिकां गताम्।[1]

रक्षसां वशमापन्नां कथं रामो न कुत्स्यति।।

अस्माकमपि दारेषु सहनीयं भविष्यति।

यथा हि कुरुते राजा प्रजा तमनुवर्तते।।–७/४३/१६–१९

## अङ्गरक्षिण:

राजमूलो हि धर्मश्चेति निरुच्य 'सर्वास्ववस्थासु रक्षितव्यो नराधिप:' इति परामर्शयन् शासकीय पुरुषस्य रक्षार्थमङ्गरक्षिणो वर्णयति–

अशिचर्मधरा योधा: सर्वायुधधरास्तथा।

राक्षसा राक्षसेन्द्रस्य पुरस्तात् संप्रतस्थिरे।।

पार्श्वत: पृष्ठतश्चैनं परिवार्य ययुस्तदा।।–६/११/५,६

रक्षाप्रसङ्गे कूटकर्मणां हिंसकानां परिहाराय सावधानताऽपेक्ष्यते–.

राक्षसो जिह्मया बुद्ध्या सन्दिष्टोऽयमिहागत:।

प्रहर्त्तुं माययाच्छन्नोविश्वस्ते त्वयि चानघ।।–६/१७/२८

## किङ्करा:

किङ्करा नाम किं कर्तव्यमिति तत्पूर्तये तत्परा: परिचरा:। निम्नश्रेण्यामन्तर्भूता: सेवका:। तथा हि–

किं कार्यं ब्रूहि भगवन् को ह्यर्थ: किं करोम्यहम्।–७/३७/८

विविधकार्यरतेषु किङ्करेषु कतिचन ते उदाह्रियन्ते–

नयेङ्गितज्ञ: सद्वृत्तो दक्षो धैर्यसमन्वित:।–७/१/१०

राज्ञस्त्वाज्ञां पुरस्कृत्य द्वा:स्थोमूर्धा कृताञ्जलि:।

प्रवेशयामास तदा तापसान् सदुरासदान्।–७/६०/७

प्रवेशावरोधे द्वा:स्थाने वक्तव्यं निबोधयति–

व्यग्रो हि राघवो ब्रह्मन् मुहूर्तं प्रतिपालय।–७/१०५/४

निदेशकारिण: –

तस्य विक्रमसम्पन्ना: सत्त्ववन्तो महाबला:।

मन: संकल्पसदृशा निदेशे हरय: स्थिता:।।–५/६८/१८

येषां नोपरि नाधस्तान्न तिर्यग् बाधते गति:।

न च कर्मसु सीदन्ति महत्स्वमिततेजसः।।–५/६८/१९

भोजनादौ नियुक्ताः सेवकाः –

रामस्याभ्यवहारार्थं किङ्करास्तूर्यमाहरन्।–७/४२/२०

पाककर्त्ता सूदः –

हविष्यं सामिषं स्वादु यथा भवति भोजनम्।

तथा कुरुत शीघ्रं वै परितुष्येद् यथा गुरुः।।– ७/६५/२३

आतिथ्यकर्मणि नियोजने–

यस्य यस्य यथाकामं षड्रसेष्वभिपूजितम्।

तत्सर्वं कामधुग् दिव्ये अभिवर्षं कृते मम।।–१/५२/२२

उत्सारिणः –

कञ्चुकोष्णीषिणस्तत्र वेत्रझर्झरपाणयः।

उत्सारयन्तस्तान् योधान् समन्तात् परिचक्रमुः।।

## राजशिल्पिनः

राज्ये सुखसमृद्धि सौविध्य संवर्धनाय जलाशय–सेतु–भवन प्रभृति जनोपयोगि शिल्पकार्यजातं मार्ग सम्पादयतां यान्त्रिक विभागीयानां स्थितिरुपकल्प्यते–

### मार्ग निर्माणम्

क्रियतां शिल्पिभिः पन्थाः समानि विषमाणि च।

रक्षिणश्चानुसंयान्तु पथि दुर्गविचारकाः।।–२/६९/१३

अथभूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः।

स्व कर्माभिरताः शूराः खनका यन्त्रकास्तथा।।

कर्मान्तिकाः स्थपतयश्च पुरुषा यन्त्रकोविदाः।

तथा वर्धकयश्चैवमार्गिणो वृक्षतक्षकाः।।–२/८०/१,२

ते स्ववारं समास्थाय वर्त्म कर्मणि कोविदाः।

करणैर्विविधोपेतैः पुरस्तात् सम्प्रतस्थिरे।।–२/८०/५

वनपरिष्करणम् –

लतावल्लीश्च गुल्मांश्च स्थाणूनश्मन एव च।
जनास्ते चक्रिरे मार्गं छिन्दन्तो विविधान् द्रुमान्।।
अवृक्षेषु च देशेषु केचिद् वृक्षानरोपयन्।
केचित्कुठारैष्टङ्कैश्च दात्रैश्छिन्दन् क्वचित् क्वचित्।
अपरे वीरणस्तम्बान् बलिनो बलवत्तराः।
विधमन्ति स्म दुर्गाणि स्थलानि च ततस्ततः।।–२/८०/७–८

पथि संस्कार– परिष्कार भूमिसमीकरणंच–

अपरे पूयरन् कूपान् पांशुभिः श्वभ्रमायतम्।
निम्नभागांस्तथैवाशु समांश्चक्रुः समन्ततः।।
बबन्धुर्बन्धनीयांश्च क्षोद्यान् संचुक्षुदुस्तथा।
बिभिदुर्भेदनीयांश्च तास्तान् देशान्नरास्तदा।।–२०/८०/९–१०

जल संसाधनम्–

अचिरेण तु कालेन परिवाहान् बहूदकान्।
चक्रुर्बहुविधाकारान् सागरप्रतिमान् बहून्।।
निर्जलेषु च देशेषु खानयामासुरुत्तमान्।
उदपानान् बहुविधान् वेदिकापरिमण्डितान्।।–२/८०/११–१२

शीतातपवर्षघ्नं श्वभ्र निवासनिर्माणं प्रदर्शयति–

श्वभ्रं च यत्सुखस्पर्शं क्रियतां शिल्पिभिर्मम।
वर्षघ्नमेकं श्वभ्रं तु हिमघ्नमपरं तथा।।
ग्रीष्मघ्नं तु सुखस्पर्शमेकं कुर्वन्तु शिल्पिनः।
क्रियतां रमणीयं च श्वभ्राणा सर्वतोदिशम्।।
सुखमत्रवसिष्यामि यावत्कालस्य पर्ययः।
पुष्पाणि च सुगन्धीनि क्रियन्तां तेषु नित्यशः।।

परिवार्य यथा मे स्युरध्यर्ध योजनं तथा।।--७/५४/८--१३

सेतुनिर्माणम्--

अय सौम्य नलो नाम तनयो विश्वकर्मण:।

पिता दत्तवर: श्रीमान् प्रीतिमान् विश्वकर्मण:।।

एष सेतु महोत्साह: करोतु मयि वानर:।।--६/२२/४५--४६

तथा हि--

अह सेतु करिष्यामि विस्तीर्णे मकरालये।

पितु: सामर्थ्यमासाद्य तत्त्वमाह महोदधि:।।

समर्थश्चाप्यहं सेतु कर्तु वै वरुणालये।

तस्मादद्यैव बध्नन्तु सेतुं वानरपुङ्गवा:।।--६/२२/४८,५३

शिल्पकर्मसाधनभूतानां पाषाणादीनां श्रमिककृतं परिवहनादि --

दण्डानन्ये प्रगृह्णन्ति विचिन्वन्ति तथापरे।

वानरै: शतशस्तत्र रामस्याज्ञापुर: सरै:।।--६/२२/६४

ते नगान् नगसंकाशा: शाखामृगगणर्षभा:।

बभञ्जु: पादपांस्तत्र प्रचकर्षुश्च सागरम्।।

पाषाणांश्च गिरिप्रख्यान् गिरीणां शिखराणि च।

दृश्यन्ते परिधावन्तो गृह्य दानवसंन्निभा:।

शिलानां क्षिप्यमाणाना शैलानाम् तत्र पात्यताम्।

बभूव तुमुल: शब्दस्तदा तस्मिन्महोदधौ।।--६/२२/५५,६६,६७

निर्माणे क्षिप्रता क्रमबद्धकार्यक्रमतां निर्दिशति--

कृतानि प्रथमेनाह्ना योजनानि चतुर्दश।

प्रहृष्टैर्गजसंकाशैस्त्वरमाणै: प्लवङ्गमै:।।

द्वितीयेन तथैवाह्ना योजनानि तु विंशति:।

अह्ना तृतीयेन तथा योजनानि तु सागरे।

त्वरमाणैर्महाकायैरेकविंशतिरेव च।।

चतुर्थेन तथा चाह्ना प्लवगैः क्षिप्रकारिभिः।

योजनानि त्रयोविंशत् सुवेलमधिकृत्यवै।।

स वानरवरः श्रीमान् विश्वकर्मात्मजो बली।

बबन्ध सागरे सेतुं यथा चास्य पिता तथा।।

स नलेन कृतः सेतुः सागरे मकरालये।

शुशुभे सुभगः श्रीमान् स्वातीपथमिवाम्बरे।।–६/२२/६८–७४

रचना सम्पन्नतायाः प्रदर्शनसमारोहः –

ततो देवाः सगन्धर्वाः सिद्धाश्चपरमर्षयः।

आगम्य गगने तस्थुर्द्रष्टुकामास्तदद्भुतम्।।–६/२२/७५

नलश्चक्रे महासेतुं मध्ये नदनदीपतेः।–६/२२/६३

प्रसङ्गतोऽन्ये च शिल्प व्यवसायिनः –

मणिकाराश्च ये केचित् कुम्भकाराश्च शोभनाः।

सूत्रकर्मविशेषज्ञाः ये च शस्त्रोपजीविनः।

सुवर्णकाराः प्रख्यातास्तथा कम्बलकारकाः।

स्नापकोष्णोदका वैद्या धूपकाः शौण्डिकास्तथा।।

रजकास्तुन्नवायाश्च ग्रामघोषमहत्तराः।

शैलूषाश्च सह स्त्रीभिर्यान्ति कैवर्तकास्तथा।।–२/८३/१२,१४,१५

## व्यवहारप्रकरणम्

न्यायकार्य जनानां प्रेयः श्रेयः साधनं धर्माधिष्ठानम्। तत्तु व्यवहारप्रकरणाधीनम् पौरकार्य व्यवहारैः सह नित्यमनुष्ठेयमित्याह–

धर्मे प्रयतमानानां पौरकार्यस्य नित्यता।–७/१०२/१६

तथा हि–

धर्मासनगतो राजा रामो राजीवलोचनः।

राजधर्मानवेक्षन् वै ब्राह्मणैर्नैगमैः सह।

पुरोधसा वसिष्ठेन ऋषिणा कश्यपेन च।।

मन्त्रिभिर्व्यवहारज्ञैस्तथाऽन्यैर्धर्मपाठकैः।

नीतिज्ञैरथ सभ्यैश्च राजभिः सा सभा वृता।।–७/प्र०१/१,२,३

पौरकार्यस्य नित्यतामनुसृत्य तदुपतिष्ठते–

अथ रामोऽब्रवीत्तत्र लक्ष्मणं शुभलक्षणम्।

कार्यार्थिनश्च सौमित्रे व्याहर्तुं त्वमुपाक्रम।।–७/प्र०१/५–६

आहूयन्तां प्रकृतयः पुरोधामन्त्रिणस्तथा।

कार्यार्थिनश्च पुरुषाः स्त्रियो वा पुरुषर्षभ।।–७/५३/५

नैगमैः पुरोधोभिर्मन्त्रिभिश्च सह समन्वितो राजशासकः नरनारीनिर्विशेषाणां तत्तदभियोगिनां न्यायव्यवहारं विविध व्यवहारानुसारं निर्वहेदिति तदर्थमार्षीसंहितामपेक्षते। तदाह–

भक्त्या रामस्य ये चेमां संहितामृषिणाकृताम्।–६/१२८/१२३

धर्मसंहितया वाचा धर्मज्ञ परिपालय।–४/१८/४८

तां पुनरनुसृत्य व्यवहारकार्य सम्पादयति। एवं हि –

सम्यक् प्रणीतया नीत्या नाधर्मो विद्यते क्वचित्।।–७/प्र०१/१२

तद्धि व्यवहारकार्यजातं सति प्रयोजने लेखनीयमपि भवेदिति सङ्केतयति–

ये लिखन्तीह च नरास्तेषां वासस्त्रिविष्टपे।।–६/१२८/१२३

तद्धि व्यवहारकार्य द्विधा विभक्तम्, दण्डविभागो न्यायविभागश्च, तत्रोद्दण्डतां व्यावर्तनाय लोकरक्षणाय च दण्डमहत्त्वमित्याह–

दण्डेन च प्रजा रक्ष मा च दण्डमकारणे।–७/७९/८

न्याय व्यवहार निर्वहणे कार्याणां वैविध्येन तदनु विभागप्रविभागविभजनम्–

ततस्ते न्यायतः कृत्वा प्रविभागं द्विजोत्तमाः।–१/१४/५२

दण्डनीयादण्डनीय निर्धारणे तदुपयुक्त–दण्डप्रदाने च प्रयोजनीय–न्यायविचारो वाञ्छनीयः। यतो हि–

नहि लोकविरुद्धस्य लोकवृत्तादुपेयुषः।
दण्डादन्यत्र पश्यामि निग्रहं परियूथप।।–४/१८/२१
राजदण्डपरामृष्टा तिष्ठन्ते नापराधिनः।।
तस्माद्दण्डे महाबाहो यत्नवान् भव पुत्रक।
धर्मो हि परमो लोके कुर्वतस्ते भविष्यति।।–७/७९/१०
अपराधिषु यो दण्डः पात्यते मानवेषु वै।
स दण्डी विधिवन्मुक्तः स्वर्गं नयति पार्थिवम्।।–७/७९/९

एवं हि दण्डितानां भवति निष्कृतिः –

श्रूयते मनुना गीतौ श्लोकौ चारित्र्यवत्सलौ।
गृहीतौ धर्मकुशलैस्तथा तच्चरितं मया।।
राजभिर्धृतदण्डाश्च कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा।।
शासनाद् वापि मोक्षाद् वा स्तेनः पापात्प्रमुच्यते।

अन्यथा–

राजा त्वशासन् पापस्य तदवाप्नोति किल्विषम्।।–४/१८/३०–३२

'दण्डेन प्रजा रक्ष मा च दण्डमकारणे' इत्युक्तिं पुनर्विवृणुते–

गृहीतश्चैव पृष्टश्च काले दृष्टः सकारणः।
कच्चिन्न मुच्यते चौरो धनलोभान्नरर्षभ।।–२/१००/५७
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि राघव।
तानि पुत्र पशून् घ्नन्ति प्रीत्यर्थमनुशासत।।–२/१००/५९
ते वयं मार्गं विभ्रष्टं स्वधर्मे परमे स्थिताः।
भरताज्ञां पुरस्कृत्य चिन्तयामो यथाविधि।।–४/१८/११

'अपराधिषु यो दण्डः' इत्यपराधपरम्परां प्रदर्शयति–

धर्मापराधो यथा–

कारयित्वा महत्कर्म भर्ता भृत्यमनर्थकम्।

अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः।।

संश्रुत्य च तपस्विभ्यः सत्रे वै यज्ञदक्षिणाम्।

तां चालपनां पापं यस्यार्योऽनुमते गतः।।–२/७५/२३/२६

अर्थापराधा यथा–

क्वचिन्न ब्राह्मणधनं हृतं रामेण कस्यचित्।

क्वचिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः।।–२/७२/४४

कामापराधा यथा–

धर्मदारान् परित्यज्य परदारान्निषेवताम्।

त्यक्तधर्मरतिर्मूढ़ो यस्यार्योनुमते गतः।।–२/७५/५५

निवर्तय रतिं नीचां परदाराभिमर्शनम्।–३/५०/७

कामं वर्तसे कामात् स्नुषायां पापकर्मकृत्।–४/१८/१९

भ्रातृभार्याभिमर्शेऽस्मिन् दण्डोऽयं प्रतिपादितः।

औरसी भगिनी वापि भार्यां वाप्यनुजस्य च।

प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः।।–४/१८/२०,२२,२३

क्वचिन्न परदारान्वा राजपुत्रोऽभिमन्यते।–२/७२/४५

प्रकीर्णापराधा यथा–

मित्रद्रोहे च यत्पापं तत्पापं प्रतिपद्यताम्।–२/७५/४५

भृत्यत्यागे च यत्पापं तत्पापं प्रतिपद्यताम्।

बालवत्सां च गां दोग्धु यस्याऽर्योऽनुमते गतः।।

विश्वासात्कथितं किञ्चित्परिवादं मिथः क्वचित्।

विवृणोति स दुष्टात्मा यस्याऽऽर्योनुमते गतः।।–२/७५/३७,५४,३२

कूटापराधः –

उपायकुशलं वैद्यं भृत्यसंदूषणे रतम्।

शूरमैश्वर्यकामं च यो हन्ति न स हन्यते।।–२/१००/२९

वधनिर्वासनार्हा दुरपराधाः, हत्या–विषप्रयोगबलात्कारादि पापजन्याः –

राजस्त्री बालवृद्धानां वधे यत्पापमुच्यते।–२/७५/३७

राजहा ब्रह्महा गोघ्नश्चौरः प्राणिवधे रतः।–४/१७/३६

पानीय दूषके पापं तथैव विषदायके।

यदग्निदायके पापं यत्पापं गुरुतल्पगे।।–२/७५/५६,४५

एवमुक्त्वा तु तां कन्यां दोर्भ्यां प्राप्य बलाद्बली।

विस्फुरन्ती यथाकामं मैथुनायोपचक्रमे।।–७/८०/१६

इत्यादयो दुरपराधाः घोरसंहितान्तर्गता वधादिदण्डयोग्या भवन्तीत्याह–

यस्मात्स कृतवान् पापमीदृशं घोरसंहितम्।

पापकर्म समाचारो वधं प्राप्स्यति दुर्मतिः।।–७/८१/६/७

अपराधिनां प्रच्छन्नतया स्थितानामन्वेषणम्–

वनानि गिरयो नद्यो दुर्गाणि गहनानि च।

दरी गिरिगुहांश्चैव विचिता सर्वमन्ततः।।–४/४९/२

अथ केचिद् दण्डप्रकाराः उच्यते–

दृष्टा हि बहवो दण्डाः। – ४/५२/१४

वैरुप्यमङ्गेषु

कशाभिघातः

मौण्डयं तथा लक्षणसन्निपातः। – ४/५२/१५

त्यागो वधो वा

उपांशु दण्डेन हि

बन्धनेनोपपादयेत्।

वधाभावे त्यागः

देशनिर्वासनम्।

मृत्युदण्डकल्पः –

स त्वमग्निं प्रविश वा स्वयं वा विशदण्डकान्।

रज्जुं बध्वा तथा कण्ठे नहि तेऽन्यत् परायणम्।।–२/७४/३३

अथ दण्डविधाने प्रथमापराधपरिज्ञानं प्रयोजनीयतया मन्यते–

अपराधं विना हन्तुं लोको वीर न मंस्यते।।–३/७/२५

अथ च अपराधविचारे स्वविषयबाह्यः किल्विषप्रमाणरहितो वा नाभियोक्तव्यः–

विषये पुरे वा न ते यदा पापं करोम्यहम्।

न च त्वामवजानेऽहं कस्मात् तं हंस्यकिल्विषम्।।–४/१७/२४

अपराधाभिज्ञानप्रकारः –

अशक्यं सहसा राजन् भावो बोद्धुं परस्य वै।

तथापि पुनः –

अन्तरेण स्वैरभिन्नैर्नैपुण्यं पश्यतां भृशम्।।

आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम्।।

बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम्।–६/१७/६१,६४

सापराधलक्षणमुदीर्य व्यतिरेकेण निरपराधानामपि लक्षणं सूचयति–

नत्वस्य ब्रुवतो यातु लक्ष्यते दुष्टभावना।

प्रसन्नवदनं चापि तस्मान्मे नास्ति संशयः।।

अशङ्कितमतिः स्वस्थो न शठः परिसर्पति।

न चास्य दुष्टवागस्ति तस्मान्मे नास्ति संशयः।।–६/१७/६२,६३

अभियोग स्थापनात्परं सापराधस्य प्रतिवाक्यं श्राव्यमित्याह–

तत्त्वत: कथयस्वाद्य ततो वानर मोक्ष्यसे।

अनृतं वदतश्चापि दुर्लभं तव जीवितम्।।–५/५०/११

प्रतिवक्तव्ये परमसाक्ष्ये वा अधिक्रियमाणानां कृते शपथाचारो यथा–

अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन।

एतत्ते प्रतिजानामि सत्येनैव शपाम्यहम्।।

सति सिद्धे चारोपे न्यायनिर्णयविधि: –

उत्सेकेनाभिपन्नस्य गर्हितस्याऽहितस्य च।

कर्मण: प्राप्नुहीदानीं तस्याद्य सुमहत्फलम्।।

दारुण दण्ड समये वक्तव्यमाह–

तदलं परितापेन धर्मत: परिकल्पित:।

वधो वानरशार्दूल न वयं स्ववशेस्थिता:।।–४/१८/३५

तदेतत् कारणं पश्य यदर्थं त्वं मया हत:।।–४/१८/१८

एवं हि–

दण्डं य: पातयेद्दण्डं दण्ड्यो यश्चापि दण्ड्यते।

कार्यकारणसिद्धार्थावुभौ तौ नावसीदत:।।–४/१८/६१

अपराधिन: कृते नापरंस्तत्सम्बन्धिवर्गो निग्राह्यो भवति–

न पर: पापमादत्ते परेषां पापकर्मणाम्।–६/११३/४४

एकस्यापराधिन: कृते न समूहस्य पीडा विधेया–

नैकस्य तु कृते लोकान् विनाशयितुमर्हसि।–३/६५/९

किन्तु ये केचन अपराधकर्मणि सहभागिनस्तेऽपि निग्राह्या: –

अयं तु भावो दुर्बुद्धे यस्त्वयेह प्रवर्तित:।

तत्रार्धं तस्य य: कर्ता त्वय्यर्धं निपतिष्यति।।

दण्डविभागे दिशानिर्देशाय मुख्यतया प्रजारक्षणजन्यमपराधरोधं निर्वर्ण्य न्यायविभागे मुख्यत: न्यायविभागीय क्रीत–विक्रीत–दत्त–गृहीतादिविषये निर्णयते–

विक्रीतुमाहितुं क्रीतं यत् पित्रा जीविता मम।

न तल्लोपयितुं शक्यं मया वा भरतेन वा।।–२/१११/२८

व्यवहारनिर्णये विलम्बो व्यवधानं चानर्थकम्–

कार्यार्थिनां विमर्दो हि राज्ञां दोषाय कल्पते।

तच्छीघ्रं दर्शनं मध्यमभिवर्तन्तु कार्यिण:।।–७/५३/२५

तथाहि –

पौर–कार्याणि यो राजा न करोति दिने दिने।

संवृते नरके घोरे पतितो नात्र संशय:।। – ७/५३/६

अतएव आदर्शभूतो राज्यशासको न्यायनिर्णेता च कर्तव्याकरणे संतप्यते–

चत्वारो दिवसा: सौम्य कार्यं पौरजनस्य च।

अकुर्वाणस्य सौमित्रे! तन्मे मर्माणि कृन्तति।।–७/५३/४

किञ्च दण्डव्यवहार विधौ नियुक्ता शुद्धचारित्र्या: लोभवर्जिता: भवेयु: –

कच्चिदार्योऽपि शुद्धात्मा क्षारितश्चाप्यकर्मणा।

अदृष्ट: शास्त्रकुशलैर्न लोभाद् वध्यते शुचि:।।–२/१००/५६

गृहीतश्चैव पृष्ठश्च काले दृष्ट: सकारण:।

कच्चिन्नमुच्यते चौरो धनलोभान्नरर्षभ।।–२/१००/५६–५७

व्यवहारप्रकरणमुपसंहरन् दण्डसंहितामनुसृत्य दाण्डिकद्वारैव दण्डविधानम्, न तु कैश्चिदन्यै: पीडितैरपि स्वहस्ते तद्विधेयमित्याह–

काम तप: प्रभावेण शक्ता हन्तुं निशाचरम्।

तेन शापं न मुञ्चामो भक्ष्यमाणाश्च राक्षसै:।।

तदर्द्यमानान् रक्षोभिर्दण्डकारण्य वासिभि:।

रक्ष नस्त्वं सह भ्रात्रा त्वन्नाथा हि वयं वने।।–३/१०/१३,१५,१६

दण्डो हि दण्ड्यानां पुनरपराध निरोधपूर्वकं धर्म्यपथप्रवर्तनाय साफल्यं भजते–

तद्भवान् दण्डसंयोगादस्माद् विगतकल्मष:।

गत: स्वां प्रकृतिं धर्म्यां दण्डदिष्टेन वर्त्मना।।–४/१८/६२

०००

# तृतीयं नयाङ्गकाण्डम्

सूत्ररूपेण नयाङ्गमङ्कते –

दश–पञ्च–चतुर्वर्गान् सप्तवर्गं च तत्त्वतः ।
अष्टवर्गं त्रिवर्गं च विद्यास्तिस्रश्च राघव ।।
इन्द्रियाणां जयं बुद्ध्वा षाड्गुण्यं दैव–मानुषम् ।
कृत्यं विंशतिवर्गञ्च तथा प्रकृतिमण्डलम् ।।
यात्रा दण्डविधानं च द्वि–योनी सन्धि–विग्रहौ ।
कच्चिदेतान् महाप्राज्ञ यथावदनुमन्यसे ।। –२/१००/६८–७०

पुनः संक्षिप्य निरूपयते–

बुद्ध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् ।
चतुर्दश गुणं मेने हनूमान् वालिनः सुतम् ।। –४/५४/२

राज्यकाण्डे आसज्जनीयान् राजगुणान् विवृण्वता प्रतिपादितानि पूर्वोक्तानि समुच्चितानि नयाङ्गानि पुनः प्रसङ्गेन समुल्लेखयता तेषु कतिपयान्येव नयाङ्गानि विवृतानि सन्ति।

षाड्गुण्यम् –

षाड्गुण्यस्य पदं वेत्ति नीतिकर्ता स राघवः।

नीतिशालिना राजनायकेन षाड्गुण्यविधानं सदा प्रयोजनीयमिति मत्वा नीतिशास्त्रे "सन्धिं च विग्रहं चैव यानमासनमेव च द्वैधीभावं संश्रयं च षड्गुणान् चिन्तयेत्सदा।" इति सन्ततं चिन्तनीयानां गुणानां विवेचनं यथायथं प्रस्तोतुमुपक्रमते–

१. अथ सन्धिः

सन्दधानो हि कालेन विगृह्णंश्चारिभिः सह।
स्वपक्षे वर्धनं कुर्वन् महदैश्वर्यमश्नुते ।। –६/३५/८

अथ कालेन सन्दधानो विगृह्णश्चेत्युभय पक्षाश्रयिणोर्विवदमानयोरुभयो: किञ्चन लक्ष्यमालक्ष्य सामञ्जस्येन व्यवहरतोरेकीभवनं कथं केन सह सङ्गच्छते, इति निरूपयति--

तन्महयं रोचते सन्धि: सह रामेण रावण ।

यदर्थमभियुक्तोऽसि सीता तस्मै प्रदीयताम् ।।–६/३५/१०

हीयमानेन कर्तव्यो राज्ञा सन्धि: समेन च ।–६/३५/९

अभियोगनिमित्त परिहरणं सन्धेर्मूलं प्रतिपाद्य ज्यायसा शत्रुणा सन्धेयम्, तच्च ज्यायस्त्वं मित्रबलेनापि सन्धिबलेनापि संभवतीत्याह –

तस्य देवर्षय: सर्वे गन्धर्वाश्च जयैषिण: ।

विरोधं मा गमस्तेन सन्धिस्ते तेन रोचताम् ।। –६/३५/११

सन्धे: काल–मर्यादा–

यावन्न लङ्कां समभिद्रवन्ति बलीमुखा: पर्वतकूटमात्रा:।

दंष्ट्रायुधाश्चैव नखायुधाश्च प्रदीयतां दाशरथाय मैथिली।।

–६/१४/३

यत: –

को ब्रह्म दण्डप्रतिमप्रकाशानर्चिष्मत: कालनिकाश रूपान् ।

सहेत बाणान् यमदण्डकल्पान् समक्षमुक्तान् युधि राघवेण ।।

–६/१५/१३

अत: सन्ध्यर्थमुपचार आवश्यक: –

धनानि रत्नानि सुभूषणानि वासांसि दिव्यानि मणींश्च चित्रान् ।

सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोका: ।।

–६/१५/१४

निष्कर्षतः सन्धिं सन्दिशति–

तत्क्षमो न विरोधस्ते सह तेन महात्मना ।।

दुर्जयेनाप्रमेयेण रामेण रणकर्मसु ।।

अहं हि ते क्षमं मन्ये तेन रामेण सौहृदम् ।।–४/१५/२१–२२–२४

तत्प्रकारमादिशति –

दानमानादिसत्कारैः कुरुष्व प्रत्यनन्तरम् ।

वैरमेतत्समुत्सृज्य तव पार्श्वे स तिष्ठतु ।। –४/१५/२७

२. विग्रहः —

विग्रहः परेण रणादिना संघर्षः। स चात्मनो ज्यायस्त्वं शत्रोश्च लघीयस्त्वं निश्चित्वानेनैव समालम्बनीयः –

न शत्रुमवमन्येत ज्यायान् कुर्वीत विग्रहम् ।–६/३५/९

विग्रहावसरं निरूपयति –

न दर्शयति साम्ना मे सागरो रूपमात्मनः ।

अद्य युद्धेन महता समुद्रं परिशोषये ।। –६/२१/२१,२०

शत्रुबलमुदीक्ष्य ज्यायस्त्वमात्मनःसमीक्ष्यैव विग्रहो विधेय इति सत्यम्। किन्तु अवरोधादिना कृते तस्यानिवार्यताऽपि भवतीत्याह–

पुरस्योपनिविष्टस्य सहसा पीडितस्य च ।

नान्यद् युद्धात्प्रपश्यामि मोक्षं युद्धविशारद।। –६/५७/५

अविगृह्यान् परिगणयति –

विषमे वा पुरे वा ते यदा रामो महाबलः ।

नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ।। –३/५०/१५

अपि च –

सागरस्येव मे वेगो मारुतस्येव मे बलम् ।

न च दाशरथिर्वेद तेन मां योद्धुमिच्छति।। —६/२४/४०

तथा हि —

प्रसीद पथ्यं शृणु जल्पितं हि मे न रोषमेवानुविधातुमर्हसि ।
क्षमो हि ते कोशलराजसूनुना न विग्रहः शक्रसमान तेजसा ।।
—४/१५/३०

विग्रहं मा कृथा वीर भ्रात्रा राजन् यवीयसा। —४/१५/२४
अहं तस्य प्रभावज्ञो न युद्धं तेन ते क्षमम्। —३/३९/१९
आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः ।। —४/५४/१२
तन्मया वार्यमाणस्तु यदि रामेण विग्रहम्।
करिष्यस्यापदं घोरां क्षिप्रं प्राप्य न शिष्यसि।। — ३/३८/२३
जीवितं च सुखं चैव राज्यं चैव सुदुर्लभम्।
यदीच्छसि चिरं भोक्तुं मा कृथा राम—विप्रियम्।। — ३/३७/२२

३. यानम् —

रिपुं प्रति युद्धाभिप्रायेण दमनाशयेन च गमनम् यानम् अभियानमिति। तच्च स्वपक्षोत्कर्षे परमोत्कर्षे 'यदा मन्येत भावेन हृष्टं पुष्टं स्वकं बलम्। परस्य विपरीतं च तदा यायात् रिपुं प्रति।।' इति मनूक्तदिशा सिद्ध्यतीति बोधयति—

येनकेन तु मार्गेण तराम वरुणालयम्।
हतेति नगरी लङ्का वानरैरुपधार्यताम्।। — ६/३/३०
प्रमत्तेष्वभियुक्तेषु दैवेन प्रहतेषु च।
विक्रमाग्न्नात सिध्यन्ति परीक्ष्य विधिना कृताः। — ६/९/९
एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम्।
मुहूर्तेन तु युक्तेन प्रस्थानभमिरोचय।। — ६/३/३३

प्रसङ्गतो यानानर्हणीयतामाह —

अप्रमत्तं कथं तं तु विजिगीषुं बले स्थितम्।

जितरोषं दुराधर्षं तं धर्षयितुमिच्छथ।। -- ६/९/१०

४ आसनम् –

यानमसामयिकं प्रतिकूलफलकं संशयात्मकं च विविच्य, शत्रोस्तत्कालमुपेक्षणम् आसनमिति निरूपयति –

असत्यानि च युद्धानि संशयो मे न रोचते।

कश्च निःसंशयं कार्यं कुर्यात् प्राज्ञः ससंशयम्।। – ५/३०/३५

प्रसीद लङ्केश्वर राक्षसेन्द्र लङ्कां प्रसन्नो भव साधु गच्छ।

स्व स्वेषु दारेषु रमस्व नित्यं रामः सभार्यो रमतां वनेषु।।

–३/३१/४९

निगृह्यासनमप्याहुर्दुर्बलेन बलीयसा ।

आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः।। –४/५४/१२

५. द्वैधीभावः –

द्वैधीभावप्रसङ्गे नीतिमतां मतं द्विधा विभक्तम्। केचिद् दुर्बल–प्रबलयोर्मध्ये दुर्बलेन प्रबलेन वा द्वैचित्त्योत्पादनं छद्ममूलकमाचक्षते। अपरे तु बलस्य द्विधाकरणं द्वैधीभावं बलनीतिमूलकं समादधते। तदिह द्वैधीभावस्य विधाद्वयीमुदाहरणेन प्रतिपाद्यते –

तत्र छद्मवचनमूलको द्वैधीभावः* –

कामरूपधराः शूराः सुभीमाः भीमदर्शनाः।

राक्षसा वा सहस्राणि राक्षसाधिपनिश्चिताः।।

काकुत्स्थमुपसंगम्य बिभ्रतो मानसं वपुः ।

सर्वे ह्यसंभ्रमा भूत्वा ब्रुवन्तु रघुसत्तमम् ।।

प्रेषिता भरते नैव भ्रात्रा तव यवीयसा ।

स हि सेनां समुत्थाप्य क्षिप्रमेवोपयास्यति ।।

ततो वयमितस्तूर्णं शूलशक्तिगदाधराः ।

---

* दुर्बलप्रबलयोर्वाचिकमात्मसमर्पणं द्वैधीभावः इति मल्लिनाथः। बलस्य द्विधाकरणं द्वैधीभावः इति मनुमनुसृत्य चण्डेश्वरः।

चाप बांणासिहस्ताश्च त्वरितास्तत्र यामहे ।।

आकाशे गणशःस्थित्वा हत्वा तां हरिवाहिनीम् ।।

अश्मशस्त्रमहावृष्ट्या प्रापयाम यमक्षयम् ।।–६/८/१३–१७

बलमूलको द्वैधीभावः --

पूर्वद्वारं तु कुमुदः कोटिभिर्दशभिर्वृतः ।

आवृत्य बलवांस्तस्थौ हरिभिर्जितकाशिभिः।। --६/४२/२३

दक्षिणद्वारमासाद्य वीरः शतवलिः कपिः।

सुषेणः पश्चिमद्वारं गत्वा तारापिता बली।।

उत्तरद्वारमासाद्य रामः सौमित्रिणा सह।

आवृत्य वलावांस्तस्थौ सुग्रीवश्च हरीश्वरः।। --६/४२/२५,२६,२७

६. संश्रयः --

शत्रुणा क्लिश्यमानस्य बलवत्पक्षाश्रयणं संश्रयः। स च बालि पीडितस्य राघवस्य राघवाश्रयणे स्फुटो भवति। यथा

अहं विनिकृतो राम चरामीह भयार्दितः ।।

हृतभार्यो वने त्रस्तो दुर्गमेतदुपाश्रितः ।

सोऽहं त्रस्तो वने भीतो वसाम्युद्भ्रान्त चेतनः।।

वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ।

वालिनो मे महाभाग भयार्तस्याभयं कुरु।। --४/५/२१--२२,२३

त्वामहं पुरुषव्याघ्र हिमवन्तमिवाश्रितः । --४/११/७८

तव प्रसादेन नृसिंह वीर प्रियां च राज्यं च समाप्नुयामहम्।

तथा कुरु त्वं नरदेव वैरिणं यथा न हिंस्यात्स पुनर्ममाग्रजम्।। --४/५/३०

विभीषणप्रसङ्गे बलवदाश्रयणम् –

उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणम् ।

बालिनं च हतंश्रुत्वा सुग्रीवं चाभिषेचितम् ।।–६/१७/६६

संश्रयमिच्छन्तं शत्रुपक्षीयं विजिगीषुर्नूनं संगृह्णीयादिति –

राज्यं प्रार्थयमानस्तु बुद्धिपूर्वमिहागतः।

एतावत्तु पुरस्कृत्य युज्यते तस्य संग्रहः।।–६/१७/६७

अन्यथा संश्रयाप्रदाने दोषं पुष्णाति –

एवं दोषो महानत्र प्रपन्नानामरक्षणे।

अस्वर्ग्यं चायशस्यं च बलवीर्य–विनाशनम् ।।–६/१८/३१

संश्रयग्रहीतुः संश्रयप्रदातुश्च मध्ये परस्पर हित निबन्धनं सर्वथाऽभ्यर्थितं भवतीति समुदाहरति–

तत्र संश्रयग्रहीतुः कृते –

राक्षसांना वधे साह्यं लंकायाश्च प्रधर्षणे।

करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् ।। –६/१९/२३

संश्रयप्रदातुः कृते –

अहत्वा रावणं संख्ये सपुत्रजनबान्धवम् ।

अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैः भ्रातृभिः शपे।–६/१९/२१

क्वचित्तु समानस्थित्योर्मध्ये पारस्परिकः संश्रयो भवत्युदाहरति –

सुग्रीवः राघवश्चैव वयस्यत्वमुपागतौ।

ततः सुप्रीतमनसौ तावुभौ हरिराघवौ ।।

अन्योन्यमभिवीक्षन्तौ न तृप्तिमभिजग्मतुः

त्वं वयस्योऽथ हृद्यो मे ह्येकं दुःखं सुखं च नौ ।। –४/५/१६/१७

तत्र च परस्परं श्रयणे पक्षयोरुभयोः संश्रुतिः –

बालिनं तं वधिष्यामि तव भार्यापहारिणम्।

अमोघाः सूर्यसंकाशा ममैते निशिताः शराः।।–४/५/२६

भार्या वियोगजं दुःखं न चिरात् त्वं विमोक्ष्यसे।

अहं तामानयिष्यामि नष्टां वेदश्रुतीमिव।। –४/६/५

## त्रिवर्गः

वृद्धि–क्षयस्थानाभ्युदयाः समवेतास्त्रिवर्गपदेन समुदीरिताः। ते चोभयपक्षीया विवेचनीयाः यथा–

परस्य वीर्यं स्वबलं च बुद्ध्वा स्थानं क्षयं चैव तथैव वृद्धिम्। –६/१४/२२

इति क्रमशोऽत्र विवेच्यन्ते। प्रसङ्गमुखेन –

१. वृद्धिः –

कच्चिदक्षौहिणीं भीमां भरतो भ्रातृवत्सलः।
ध्वजिनीं मन्त्रिभिर्गुप्तां प्रेषयिष्यति मत्कृते।।
वानराधिपतिः श्रीमान् सुग्रीवः कच्चिदेष्यति।
मत्कृते हरिभिर्वीरैर्वृतो दन्तनखायुधैः।।
कच्चिच्च लक्ष्मणः शूरः सुमित्रानन्दवर्धनः।
अस्त्रविच्छरजालेन राक्षसान् वधमेष्यति।। –५/३६/२४–२६

२. क्षयः –

प्रक्षीणं स्वबलं दृष्ट्वा वध्यमानं बलीमुखैः।
बभूवास्य व्यथा युद्धे दृष्ट्वा दैवविपर्ययम्।।–६/९७/३

३. स्थानम् (अभ्युदयजनकम् स्थितिस्थापकम्) –

तिष्ठ वा किं महाराज श्रमेण तव वानरान् ।
अयमेको महाबाहुः इन्द्रजित् क्षमयिष्यति।। –६/७/१८

## उपायाः

विजयमूलमर्मणि राजनयिक कर्मणि साधनीभूतानाम् उपायानामुपयोगे प्रवर्नयति--

उपायकुशलो ह्येव जयेच्छत्रूनतन्द्रितः।–६/८/१२

तत्र उपायश्चतुःप्रकारकः –

उपप्रदानं सान्त्वं वा भेदं वा कुशलैः कृतम्।

समतिक्रम्य दण्डेन सिद्धिमर्थेषु रोचये।। –६/१३/७

१. साम –

सान्त्वैश्च विविधैः काले किं न कुर्यां हितं तव। –६/५७/१५

यदर्थमभियुक्तोऽसि सीता तस्मै प्रदीयताम्।।–६/३५/१०

इदं पुरस्यास्य स राक्षसस्य राज्ञश्च पथ्यं ससुहृज्जनस्य।

सम्यग् हि वाक्यं स्वमतं ब्रवीमि नरेन्द्रपुत्राय ददातु मैथिलीम्।।

–६/१४/२१

इयं किल पुरी रम्या सुमालिप्रमुखैः पुरा ।

भुक्तपूर्वा विशालाक्ष ! राक्षसैर्भीमविक्रमैः।

तेन विज्ञाप्यते सोऽयं साम्प्रतं विश्रवात्मज।

तदेषा दीयतां तात याचतस्तस्य सामतः ।। –७/११/२९,३०

प्रसादये त्वां बन्धुत्वात् कुरुष्व वचनं मम ।

हितं तथ्यं त्वहं ब्रूमि दीयतामस्य मैथिली ।। –६/९/२०

२. दानम् –

धनानि रत्नानि सुभूषणानि वासांसि चित्राणि मणींश्च दिव्यान्।

सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोकाः ।।

–६/१५/१४

३. दण्डः –

अप्युपायैस्त्रिभिस्तात योऽर्थः प्राप्तुं न शक्यते।

तस्य विक्रमकालांस्तान् युक्तानाहुर्मनीषिणः।।–६/९/८

शीलेन साम्ना विनयेन सीतां नयेन च प्राप्स्यसि चेन्नरेन्द्र ।

ततः समुत्सादय हेमपुङ्खैर्महेन्द्रवज्रप्रतिमैः शरौघैः ।।

दण्ड एव वरोलोके पुरुषस्येति मे मतिः । ६/२२/४९

ददौ दण्डभयाद् गाधं राघवाय महोदधिः।। –६/२२/५०

४. विभेदः –

रामस्य पक्षधरं विभेदयितुं रावणः शुकं सन्दिशति–

सुग्रीवं ब्रूहि गत्वाशु राजानं वचनान्मम।

यथासंदेशमक्लीवं श्लक्ष्णया परया गिरा।।

त्वं वै महाराजकुलप्रसूतो महाबलश्चर्क्षरजःसुतश्च ।

न कश्चनार्थस्तव नास्त्यनर्थस्तथापि मे भ्रातृसमो हरीश।।

अहं यद्यहरं भार्या राजपुत्रस्य धीमतः ।

किं तत्र तव सुग्रीव किष्किंधां प्रति गम्यताम् ।। –६/२०/९–११

साध्यासाध्यप्रसङ्गे प्रथमतः साम तदुत्तरमेकैकशः वर्जयति –

न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः ।।

प्राप्तुं लक्ष्मण लोकेऽस्मिन् जयो वा रणमूर्धनि ।। –६/२१/१६–१७

धिक् क्षमामकृतज्ञेषु सान्त्वं दानमथापि वा। –६/२२/४९

तत उपाय समुदायस्य प्रयोगविषये उपादेयानुपादेयौ विवृण्वते–

यदि नामात्र शक्यं स्यात् साम्ना दानेन वाऽनघ।

तरसा वा महाबाहो प्रत्यानेतुं कृतं भवेत्।। –७/११/८

न ह्यहं ते इमे सर्वे सामदानादिभिर्गुणैः ।

दण्डेन न त्वया शक्याः सुग्रीवादपकर्षितुम् ।। –४/५४/११

उपायशक्यता –

नैव साम्ना न दानेन न भेदेन कुतो युधा ।

## शक्तयः

सिद्धिमूला शक्तयस्तित्रः प्रभुशक्तिः, मन्त्रशक्तिः उत्साहशक्तिश्चेति क्रमशो निरूप्यन्ते –

१ प्रभुशक्ति: –

तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले।

पालयन्यखिलां पृथ्वीं कश्चरेद्धर्मविप्रियम्।। –४/१८/१०

प्रभुत्व नाम कोश–दण्डजं तेज: तत्र दण्डजं प्रभुत्वं प्रथयति –

न स सङ्कुचित: पन्था येन वाली हतो गत:

समये तिष्ठ सुग्रीव मा वालिपथमन्वगा:।। –४/३४/१८

एक एव रणे वाली शरेण निहतो मया।

त्वां तु सत्यादपक्रान्तं हनिष्यामि सबान्धवम्।।

अराक्षसमिमं लोकं कर्ताऽस्मि निशितै: शरै:।

न चेच्छरणमभ्येषि तामादाय तु मैथिलीम्।। –६/४१/६७

कोषजं प्रभुत्वम् –

धनैश्च सञ्चयैश्चान्यै: शक्रवैश्रवणोपम:। – १/६/३

अर्थेभ्योऽथ प्रवृद्धेभ्य: संवृतेभ्यस्ततस्तत:।

क्रिया: सर्वा:प्रवर्तन्ते पर्वतेभ्य इवापगा:।।

२. मन्त्रशक्ति: –

वैचारिकाणां मन्त्रग्रहणे धृतादराणां नावपतनमिति प्रथयति –

मन्त्रमूलं च विजयं प्रवदन्ति मनस्विन:। – ६/६/५

स च मन्त्र: प्रवृत्ते पुरस्तादेव प्राप्तव्य: –

सम्प्राप्तो मन्त्रकालो न: सागरस्येह लंघने। – ६/४/१०१

मन्त्रविषयं पुनर्विशिनष्टि –

मन्त्रकर्मनियुक्तानि न जातु विफलानि मे। – ६/१२/८

कच्चिन्मन्त्रयसे नैक: कच्चिन्न बहुभि: सह।

कच्चित्ते मन्त्रितो मन्त्रो राष्ट्रं न परिधावति।– २/१००/१८

३. उत्साहशक्तिः –

सा च सकलप्रवृत्तिप्रवर्त्तिनी साफल्यमेतीत्याह –

उत्साहो बलवानार्य नात्युत्साहात्परं बलम्।
सोत्साहस्य हि लोकेषु न किञ्चिदपि दुर्लभम्।।
उत्साहवन्तः पुरुषा नावसीदति कर्मसु।
उत्साहमात्रमाश्रित्य प्रतिलप्स्याम जानकीम्।।–४/१/१२१,१२२

तथा हि –

यदि गच्छति पातालं ततोऽभ्यधिकमेव वा।
सर्वथा रावणस्तात न भविष्यति राघव।।
प्रवृत्तिर्लभ्यतां तावत् तस्य पापस्य रक्षसः।
ततो हास्यति वा सीतां निधनं वा गमिष्यति।।
यदि याति दितेर्गर्भं रावणः सह सीतया।
तथाप्येनं हनिष्यामि न चेद् दास्यति मैथिलीम्।।– ४/१/११७–११९
चतुर्दश सहस्राणि राक्षसानां जघान यः।
जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत्। – ५/३७/१६

शक्तिसम्पन्नस्य नेतुर्वैरिणां संश्रयाभावः –

तं न पश्यामहे लोके यो नः शरणदो भवेत्।
राघवेणोपसृष्टानां कालेनेव युगक्षये।। – ६/९४/३८

## सहायाः

'सहायाः साधनोपायाः' इत्यभियुक्तोक्तौ साधनाद्युपायतः सहाया एवं वरीयांसः। तानुपसंग्रहीतुं प्रवर्तयति --

कुलपुत्राः स्ववंशोद्भवा ये च राज्यांश पोषितास्ते सहाया भवेयुः इति तान् परामृशति –

कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः।

कच्चित्प्राणांस्तवार्थेषु सन्त्यजन्ति समाहिताः। –२/१००/३४

सामन्तवर्गः –

क्षत्रियाश्च महात्मानो नाना जनपदेश्वराः ।

रामस्योपाविशन् पार्श्वे शक्रस्येव यथाऽमराः ।। –७/३७/१६

सुहृद्वर्गः –

उपयाति समृद्धार्थः सह मित्रैर्महाबलैः । – ६/१२५/३९

सैनिक साहाय्यप्रसङ्गे ग्राह्यं बलं निरूपयति –

मित्राटविबलं चैव मौलभृत्यबलं तथा ।

सर्वमेतद् बलं ग्राह्यं वर्जयित्वा द्विषद्बलम् ।।–६/१७/२४

ग्राह्यं बलं यथा– मित्रप्रोदितं बलम्, अटविबलं निष्कपटशीलत्वात् वनवासिबलं, मौलभृत्यानां परम्परागतभृत्य परिवाराणां बलम्– एतानि सहायभूतानि बलानि ग्राह्याणिस्युः। द्विषद्बलं विनिर्जितानां वा छद्मना सन्धिमुपगतानां वा द्विषतां बलं सर्वथा वर्जनीयं भवति । यतो हि –

छादयित्वाऽऽत्मभावं हि चरन्ति शठबुद्धयः ।

प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुमहान् भवेत्।। –६/१७/४०

परराष्ट्र साहाय्यम् –

सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय ते।
दत्तस्तव महासत्त्व श्रीमान् शत्रुनिवर्हणः ।।–६/१०२/४

## बल–त्रयम्

१. तत्र मित्रबलम् –

"कच्चिन्मित्राणि लभते" "मित्रैश्चापि पुरस्कृतः" विजिगीषुः सुहृत्कच्चिन्मित्रेषु च परन्तप' ¼६/३६/१७/१८½ इति मित्रबलस्य प्रयोजनीयता प्रतिपादिता। तदिह राज्यश्रीसम्पन्नस्य नेतुः समृद्धिहेतवे, विपन्नस्य च पुनर्विपद्वारणकारणाय मित्रबलमाधेयमिति प्रेरयति –

राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्जिता । – ४/२९/९

मित्राणां संग्रहः शेषस्तद्भवान् कर्तुमर्हति ।। – ४/२९/१०

शक्यं खलु भवेद् राम सहायेनत्वयाऽनघ ।

सुरराज्यमपि प्राप्तुं स्वराज्यं किमुत प्रभो ।। –४/८/३

योग्यस्य मित्रस्य लाभं प्रशंसति –

सोऽहं सभाज्यो बन्धूनां सुहृदां चैव राघव ।

यस्याग्नि साक्षिकं मित्रं लब्धं राघववंशजम् ।।–४/८/४

'उपकारफलं मित्रं विदितं मे महाकपे'।

इत्यभियुक्तोक्त्या तादृङ्मित्रमुदीरयति–

अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ ।

इक्ष्वाकूणां कुले जातौ प्रस्थितौ राम लक्ष्मणौ ।

सुग्रीवप्रियकार्यार्थं प्राप्तौ तत्र दुरासदौ ।

स ते भ्रातुर्हि विख्यातः सहायो रणकर्मणि ।।

रामः परबलामर्दी युगान्ताग्निरिवोत्थितः।

निवासवृक्षः साधूनामापन्नानांपरा गतिः।।

आर्तानां संश्रयश्चैव यशसश्चैक भाजनम् ।

ज्ञानविज्ञानसम्पन्नो निदेशे निरतः पितुः।। –४/१५/१७–२०

'उपकारफले मित्रे' इति मित्रकर्तव्यतामादिशति –

विभीषणमिमं सौम्य लङ्कायामभिषेचय।

अनुरक्तं च भक्तं च तथा पूर्वोपकारिणम्।। –६/११२/९,१०

उपकर्त्ता मित्रेण सहकारिभिः सहैव प्रत्युपकारपरायणेन भाव्यमित्युदाहरति –

कृतं सुग्रीव तत्सर्वं भवता धर्मभीरुणा ।

मित्रकामं कृतमिदं भवद्भिर्वानरर्षभाः ।।

तवापि मे प्रियं कार्यं त्वत्प्रभावान्मया जितम्। --६/१११/९७

ईदृङ् मित्रं प्रशस्यते --

स सुहृद् योविपन्नार्थं दीनमभ्युपपद्यते ।--६/६३/२७

स बन्धुर्योपनीतेषु साहाय्यायोपकल्पते ।।--६/६३/२८

यो हि मित्रेषु कालज्ञः सततं साधुवर्तते ।

तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते ।। ४/२९/१०, ११

अकृतकर्तव्यं स्वकार्यव्यग्रतया कालात्यये स्थितं दूषयति –

सन्त्यज्य सर्वकार्याणि मित्रार्थे यो न वर्तते।

सम्भ्रमाद् विकृतोत्साहः सोऽनर्थेनावरुध्यते ।।

यो हि कालव्यतीतेषु मित्रकार्येषु वर्तते।

स कृत्वा महतोऽप्यर्थान्न मित्रार्थेन युज्यते।। –४/२९/१३,१४

कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये ।

तान् मृदानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते।। –४/३०/७३

मित्रत्वबन्धने औपचारिकता –

ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम्।

सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ।। –४/५/१५–१६

कर्मनिबन्धनम् –

वालिनं तं वधिष्यामि तव भार्यापहारिणम्। –४/५/२६

भार्या वियोगजं दुःखं न चिरात्त्वं विमोक्ष्यसे ।

अहं तामानयिष्यामि नष्टां वेदश्रुतीमिव ।। –४/६/५

त्वं हि पाणिप्रदानेन वयस्यो मेऽग्निसाक्षिकम्।

कृतः प्राणैर्बहुमतः सत्येन च शपाम्यहम् ।। –४/८/२७

अपि च सर्वथा परिहरणीयं मित्रकोपकारणम् –

मित्रं स्वस्थानकुपितं जनयत्येव सम्भ्रमम्। ४/३२/६

मित्रताप्रतिपालनं दुष्करमित्याह —

सर्वथा सुकरं मित्रं दुष्करं प्रतिपालनम्।
अनित्यत्वात्तु चित्तानां प्रीतिरल्पेऽपि भिद्यते।। — ४/३२/७

मित्रत्वेऽनर्हता, अनार्येषु सौहृदं कीदृगित्याह —

यथा पुष्कर—पत्रेषु पतितास्तोय—बिन्दवः।
न श्लेषमभिगच्छन्ति तथाऽनार्येषु सौहृदम्।।
यथा शरदिमेघानां सिञ्चतामपि गर्जताम्।
स भवत्यम्बुसंक्लेदस्तथाऽनार्येषु सौहृदम्।।
यथा मधुकरस्तर्षात्काशपुष्पं पिबन्नपि।
रसमत्र न विन्देत तथाऽनार्येषु सौहृदम्।।—६/१६/११, १२, १४.

तथा हि शत्रुसंवादिना सह मित्रताऽनर्हा —

वसेत्सह सपत्नेन क्रुद्धेनाशीविषेण च।
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना।। — ६/१६/२

मित्रताप्रसङ्गे शत्रुस्थानानि —

पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान् वचः।
तत्र मित्रं प्रदुष्येत मिथ्यापृष्टं सुखागतम्।। — ६/१७/६०

असंगृह्यतायां बन्धुविरोधी जनोऽप्यविश्वसनीयः —

ईदृशं व्यसनं प्राप्तं भ्रातरं यःपरित्यजेत्।
को नाम स भवेत्तस्य यमेष न परित्यजेत्।। — ६/१८/५, ६

क्वचित् सन्दिग्धस्थितावपि मित्रसंग्रहस्य विश्वासहेतुरुपपद्यते, यथा —

उद्योगं तव सम्प्रेक्ष्य मिथ्यावृत्तं च रावणम्।
वालिनं च हतं श्रुत्वा सुग्रीवं चाभिषेचितम्।।
राज्यं प्रार्थयमानस्तु बुद्धिपूर्वमिहागतः।
एतावत्तु पुरस्कृत्य युज्यते तस्य संग्रहः।। — ६/१७/६६, ६७

मित्रत्वे स्थापनीये मर्यादाबन्धनं, यथा हि –

रोचते यदि मे सख्यं बाहुरेष प्रसारितः ।

गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा।। – ४/५/११

त्वं वयस्योऽसि हृद्यो मे ह्येकं दुःखं सुखं च नौ। – ४/५/१७

मित्रं प्रति कर्तव्यता –

भर्ता चैव सखा चैव रामो दाशरथिर्मम।

तस्यार्थकामाः सन्नद्धा गङ्गानूपेऽत्र तिष्ठत।। – २/८४/६

## कोषबलम्

'प्रतापः कोष–दण्डजं तेजः' राजनायकबलं प्रथयतां नीतिविदां सम्मतमर्थसम्भृतं कोषबलं विवृण्वन्नाह –

ब्रह्मक्षत्रमहिंसन्तस्ते कोषं समपूरयन्। – १/७/१३

कोषबलेन सम्भृतमर्थं सर्वक्रियाप्रतिपादकतया प्रशंसति –

अर्थेभ्योऽथ प्रवृद्धेभ्यः संवृतेभ्यस्ततस्ततः।

क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः।।

अर्थेन हि विमुक्तस्य पुरुषस्याल्पमेधसः।।

विच्छिद्यन्ते क्रियाःसर्वा ग्रीष्मे कुसरितो यथा।

हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः।।

अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिपाः।–६/८३/३२,३३,३९

धनसंग्रहे कांश्चिदुपायान् समाधत्ते –

आयकर्मण्युपायज्ञः सन्दृष्टव्ययकर्मवित्।–२/१/२६

राजस्वतः –

षष्ठं भजति भागं तु प्रजा धर्मेण पालयन्। – ७/७४/३१

उपहारतः –

उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च केवलाः।

कोट्याऽपरान्ताः सामुद्रा रत्नान्युपहरन्तु ते।। — २/८२/८

धनधान्यकोषः —

धान्यकोषश्च यः कश्चिद् धनकोषश्च मामकः।

तौ राममनुगच्छेतां वसन्तं निर्जने वने।। — २/३६/७

विभागान्तरोऽपि —

कोषसंग्रहे राजस्वोपहारस्वायत्तीकृतं राज्यस्थितेभ्यो वन—गिरि—खनि—प्रान्तरादि संवलितानां मणिरत्नधातुखनिजादि जन्यैर्धनैः कोषबलं परिपूरणीयमित्याह —

धनानि व्यवसायेन विचीयन्ते महावने।

धातवो विविधाश्चापि मणिरत्न सुवर्णिनः।। — ३/४३/३२—३३

पशुधनम् —

कच्चिन्नागवनं गुप्तं कच्चित्ते सन्ति धेनुकाः।

कच्चिन्न गणिकाश्वानां कुञ्जराणां च तृप्यसि।।—२/१००/५०

मुद्राधनमुदाहरति —

दशकोटिं सुवर्णस्य रजतस्य चतुर्गुणम्।

तं ते निष्कसहस्रेण ददामि द्विजपुङ्गव।।

कोषसंग्रहविधौ आयव्ययादि प्रसङ्गे सावधानताऽपेक्ष्यते —

आयस्ते विपुलः कच्चित् कच्चिदल्पतरो व्ययः।

अपात्रेषु न ते कच्चित्कोषो गच्छति राघव।। — २/१००/५४

३. दण्डबलम् —

दण्डजं तेजो हि प्रभुत्वमूलकमिति सैन्यबलं निरूपयति—

एष शास्ता च गोप्ता च नेता च युधि—सत्तमः।

भूतिकामश्च मे नित्यं नित्यं च समरप्रियः।। — ६/५५/३

दण्डप्रभावाद्दुष्ट निग्रहः —

प्राप्त—यज्ञहरं दुष्टं ब्रह्मघ्नं क्रूरकारिणम्।।

कर्कशं निरनुक्रोशं प्रजानामहिते रतम्।

रावणं सर्वभूतानां सर्वलोकभयावहम्।।—३/३२/२०, २१

तमहं दुर्मतिं क्रूरं वधिष्यामि न संशयः।।

तत्पक्षानपि तान् सर्वांस्त्रैलोक्यमपि किन्तु मा।। -- २ / ३१ / २१

दण्डबलं मुख्यतः सैन्यशक्तिमूलकम्। तदर्थं योधाः संग्राह्या सत्कर्तव्याश्च भवन्तीत्याह –

बलवन्तश्च कच्चित्ते मुख्या युद्धविशारदाः।

दृष्टापदानां विक्रान्तास्त्वया सत्कृत्य मानिताः।। -- २ / १०० / ३१

तथा हि –

विक्रान्ता बलवन्तश्च संयुगेष्वाततायिनः। ६ / ३७ / १७

सर्वे पर्वतसंकाशाः सर्वेपर्वतयोधिनः।

सर्वे दीप्तायुधधरा योधास्तस्य महात्मनः।। – ६ / ५१ / २१

रथानां नियुतं साग्रं नागानां नियुतत्रयम्।

अश्वानां षष्टिकोट्यस्तु खरोष्ट्राणां तथैव च।।

पदातयस्त्वसंख्याता जग्मुस्ते राजशासनात्। -- ६ / ९५ / २७–२८

विविधायुधहस्ताश्च शूलमुद्गर पाणयः।

गदाभिः पट्टिशैर्दण्डैरायसैर्मुसलैरपि।।

परिघैर्भिन्दिपालैश्च मल्लैः पाशैः परश्वधैः। – ६ / ५१ / २४–२५

दण्डबलशालिनां कृते संख्याबलतोपि विशिष्य प्रशिक्षितानां समरेष्वनिवर्तिनां योद्धृणां गुणवत्ता प्रशस्यते। तदाह –

अधर्षितानां शूराणां समरेष्वनिवर्तिनाम्। – ४ / १६ / ३

योधानामग्नि कल्पानां पेशलानाममर्षिणाम्।

संपूर्णा कृतविद्यानां गुहा केसरिणामिव।। – १ / ६ / २१

दण्डबलादेव –

ये हि सम्भिन्नमर्यादा नास्तिकाश्छिन्न संशयाः।

तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः।। – २ / ६७ / ३२

ooo

# चतुर्थ युद्ध काण्डम्

## सैनिक संघटनम्

'नित्यं च सगरप्रियः' (६/५५/३) इति शास्तुर्युद्धप्रियता स्वाभाविकी। तच्च युद्धं सैन्यमूलकम् कीदृशश्च ते सैनिकाः कथं च ते सन्नाह्याः सम्भावनाश्चेत्याह–

बलवन्तश्च कच्चित्ते मुख्या युद्धविशारदाः

दृष्टापदानां विक्रान्तास्त्वया सत्कृत्य मानिताः।।–२/१००/३१

युज्यतां महती सेना चतुरङ्बलान्विता। –२/७९/९

महती सेना यथा–

एते दुष्प्रसहा वीरा येषां संख्या न विद्यते। –६/२६/४२

संख्या बहुलानां सैनिकानां सुव्यवस्थायै सेनापतिः कीदृक् कार्य इत्याह–

कच्चिद्धृष्टश्च शूरश्च धृतिमान् मतिमान् वशी।

कुलीनश्चाऽनुरक्तश्च दक्षः सेनापतिः कृतः।। –२/१००/३०

पुनस्तदधस्ताद्यूथपादीनां विभागः –

यूथपा यूथपश्रेष्ठास्तेषां यूथानि भागशः। –६/२६/४०

यूथपा हरिराजस्य किङ्कराः समुपस्थिताः। –६/२७/५

प्रेक्षन्ते वानराः सर्वे स्थिता यूथपयूथपम्।। –६/२७/१५

तथाहि–

दशनागवलाः केचित् केचिद्दशगुणोत्तराः।

केचन्नागसहस्रस्य वभूवुस्तुल्यविक्रमाः।।

सन्ति चौघवलाः केचित् केचिच्छतगुणोत्तराः।

अप्रमेय वलाश्चान्ये तत्रासन् हरियूथपाः।।–६/४१/४७–४८

तत्र सैनिक निवेशने वयःस्थस्यैव नियोजनम् –

ऊनषोडशवर्षो मे रामो राजीवलोचनः।

न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः। –१/२०/२

'बलवन्तः' 'युद्धविशारदाः' वयस्थाश्चैव सैनिकाः 'समरक्षेत्रे' युज्यन्ते। एवं हि दुर्बलसैनिकस्य घोरे समरकर्मणि अप्रयोजनीयतां प्रदर्श्य तस्य केवलं नगररक्षादौ प्रयोजनीयतां युनक्ति–

यत्तु फल्गु बलं किञ्चित्तदत्रैवोपपाद्यताम्।

एतद्धि कृत्यं घोरं नो विक्रमेण प्रयुज्यताम्।।–६/४/१३

सैन्यसंग्रहः –

सन्दिदेशाऽनिमतिमान् नीलं नित्यकृतोद्यमम्।

दिक्षु सर्वासु सर्वेषां सैन्यानामुपसंग्रहे।।–४/२९/२०

यथा सेना समग्रा मे यूथपालाश्च सर्वशः।

समागच्छत्यसङ्गेन सेनाग्र्येण तथा कुरु।।

ये त्वन्तपालाः प्लवगाः शीघ्रगा व्यवसायिनः।

समानयन्तु ते शीघ्रं त्वरिताः शासनान्मम।।–४/२९, ३०,३१

महत्कृत्यमभियोज्य क्षिप्रसंग्रहप्रकारमाह –

समानयत मे क्षिप्रमिहैतान् राक्षसानिति।

कृत्यमस्ति महज्जाने कर्तव्यमति शत्रुभिः।।

राक्षसास्तद्वचः श्रुत्वा लङ्कायां परिचक्रमुः।

अनुगेहमवस्थाय विहारशयनेषु च।

उद्यानेषु च रक्षांसि चोदयन्तोऽह्यभीतवत्।।–६/११/१८,१९

अनिवार्य सैन्यसङ्ग्रहे विशेषाधिकार प्रदानम्–

स्वयं चानन्तरं कार्यं भवानेवानुपश्यतु।–४/२९/३१

सङ्ग्रहविधानव्यवस्था –

हरींश्च वृद्धानुपयातुसाङ्गदोभवान्ममाज्ञामधिकृत्य निश्चितः।

इति व्यवस्थां हरपुङ्गवेश्वरोविधाय वेश्म प्रविवेश वीर्यवान्।।

–४/२९/३३

सैन्यस्य वेतनादि नियमाः --

कच्चिद् बलस्य भक्तं च वेतनं च यथोचितम्।

सम्प्राप्तकालं दातव्यं ददासि न विलम्बसे।।–२/१००/३२

विलम्बे दोषमाह–

कालातिक्रमणे ह्येते भक्तवेतनयोर्भृताः।

भर्तुरप्यतिकुप्यन्ति सोऽनर्थः सुमहान् भवेत्।।–२/१००/३३

यथोचितभरण–पोषणाभावे तु--

स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः।

खेदिता दुःखशय्याभिस्त्वांकरिष्यन्ति पृष्ठतः।।–४/५४/१७

सैन्योपहार व्यवस्था, तत्सम्यक् प्रोत्साहनभाषादिव्यवस्था च–

ततो माल्यानि वासांसि वीराणामनुलेपनम्।

देयं च बहुयोधेभ्यः (स्वयं च मुदितः पिब)।।–६/२३/२८

बलं च सुभृतं वीर हृष्ट–पुष्टमनुद्धतम्।

सम्भाष्य सम्प्रदानेन रञ्जयस्व नरोत्तम।।–७/६४/५

एवं सम्मानितैश्चैते नन्द्यमाना यथा त्वया।

भविष्यन्ति कृतज्ञेन निवृत्ता हरियूथपाः।।–६/१२२/७

समेषां निवासादि व्यवस्थामपि च कारयेत्–

सेनामुख्यान् समानीय ततो वाक्यमुवाच ह।

एते वो गणिता वासा यत्र तत्र निवत्स्यथ।।–७/६४/१४

कातराणां वाग्वीराणां च सैनिककर्मणां निष्कासनमप्युचितम्–

शूरमानी न शूरस्त्वं मिथ्यारोपितविक्रमः।

अपयाहि जनस्थानात् त्वरितः सहबान्धवः।।–३/२१/१७–१८

प्रसङ्गतः सैनिकदण्डव्यवस्था–

संग्रामे समुपोढे च शत्रुपक्षभयङ्करे।

पलायमानो वध्येत– ।।–२/७५/३९

तीक्ष्णः प्रकृत्या सुग्रीवः स्वामिभावे व्यवस्थितः।

न क्षमिष्यति नः सर्वानपराधकृतो गतान्।।–५/५३/२१

न क्षमं चापराद्धानां गमनं स्वामिपार्श्वतः।–५/५३/२३

समयोल्लङ्घने दण्डमाह–

त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुयादिह वानरः।

तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा।।–४/२९/३७

सैन्यसंग्रहे ग्राह्यताऽग्राह्यता –

मित्राटविबलं चैव मौलभृत्यबलं तथा।

सर्वमेतद् बलं ग्राह्यं वर्जयित्वा द्विषद्बलम्। – ६/१७/२४

द्विषद्बलवर्जने हेतुमाह –

प्रविष्टः शत्रुसैन्यं हि प्राप्तः शत्रुरतर्कितः।

निहन्यादन्तरं लब्ध्वा उलूको वायसानिव।। – ६/३/३३

योद्धृवर्गस्य प्रसादनाज्जायमानं फलम् –

सोऽहं दानैश्च मानैश्च सततं पूजितस्त्वया।

सान्त्वैश्च विविधैः काले किं न कुर्यां हितं तव।। – ६/९२/९

युद्धं प्रवर्त्स्यतां योद्धॄणां प्रसन्न–म्लानमुखता जय–पराजय लक्षणे क्लृप्ता –

सन्निकर्षे च नः शूर जयंशत्रोः पराजयम्।

सुप्रभं च प्रसन्नं च तव वक्त्रं हि लक्ष्यते।।

उद्यतानां हि युद्धार्थं येषां भवति लक्ष्मण।

निष्प्रभं वदनं तेषां भवत्यायुः परिक्षयः।। – ३/२४/८,९

योद्धृधर्मः –

एषपन्थाः सुयोधानां सर्वामरगणेष्वपि।

यत्कृते हन्यते भर्तुः स पुमान् स्वर्गमृच्छति।। – ६/५७/१४

वर्जयित्वा द्विषद्बलमित्युक्तावपि कोऽपि नीतिपरश्चेत् स्वपक्षीयो भवितुमर्हतीत्याह –

यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च।

तत्र ते कीर्तयिष्यामि यथाशास्त्रमिदं शृणु।। – ६/८/१५

दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि।

युक्तमागमनं ह्यत्र सदृशं तस्य बुद्धितः।। – ६/७/५८

नो चेद् गच्छाम तं वीरं गमिष्यामो यमक्षयम्। – ४/५३/२३

उपांशु दण्डेन हि मां बन्धनेनोपपादयेत्। – ४/५५/१०

ये प्रसक्ताश्च कामेषु धर्मसूत्राश्च वानराः।

इहानयस्व तान् शीघ्रं सर्वानेव कवीश्वरान्।

अहोभिर्दशभिर्ये च नागच्छन्ति ममाज्ञया।

हन्तव्यास्ते दुरात्मानो राजशासन दूषकाः।। – ४/३७/११,१२

युद्धयात्रा– मुहूर्त विचारः –

मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय। – ६/३/३३

अभ्युत्थानं त्वमद्यैव कृष्णपक्ष चतुर्दशी।

कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः।। – ६/९२/६६

अस्मिन् मुहूर्ते सुग्रीव प्रयाणमभिरोचय।

युक्तो मुहूर्ते विजये प्राप्तो मध्यं दिवाकरः।। – ६/४/३

सैन्याह्वान विधिः –

शीघ्रं भेरीनिनादेन स्फुटं कोणाहतेन च।

समानयध्वं सैन्यानि वक्तव्यं च न कारणम्।।

सैनिक शब्दप्रयोगः –

खरस्तु तन्महत् सैन्यं रथचर्मायुधध्वजम्।

निर्यातेत्यब्रवीत् प्रेक्ष्य दूषणः सर्वरक्षसाम्। – ३/२२/१६

ततस्तु चोदितास्तेन राक्षसा ज्वलितायुधाः।

लङ्काया निर्ययुर्वीराः प्रणदन्तः परस्परम्।। – ६/७५/४९

शस्त्राभ्यासः --

(नाराजके जनपदे) शरान् सन्ततमस्यताम्।

श्रूयते तलनिर्घोषो इष्वस्त्राणामुपासने।। -- २/६७/२१

रणाभ्यासाय युद्धनाट्यम् –

अन्योन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च।

पतन्तश्चोत्पतन्त्यन्ये पातयन्त्यपरे परान्।। – ६/४/२८

गमनागमनेऽनुशासनम् –

तं यान्तमनुयान्ती सा महती हरिवाहिनी।

हृष्टाः प्रमुदिताः सर्वे सुग्रीवेणाभिपालिताः।। – ६/४/२५

तूर्णमापुप्लुवुः सर्वे सदश्वा इव चोदिताः।। – ६/४/४१

आज्ञावाक्यानुपालनम् –

प्रतिकूलितुमिच्छामि नहि वाक्यमिदं त्वया। – ३/२४/१३

एवं ते हरिशार्दूला गच्छन्ति बलदर्पिताः।

रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत्।। – ६/४/२५–२६

रणपूर्व विज्ञेयं तत्त्वम् –

देशकालौ च विज्ञेयौ लक्षणानीङ्गितानि च।

दैन्यं हर्षश्च खेदश्च रथिनश्च बलाबलम्।।

स्थल निम्नानि भूमेश्च समानि विषमाणि च।

युद्धकालश्च विज्ञेयः परस्यान्तरदर्शनम्।।

उपयानाऽपयाने च स्थानं प्रत्यपसर्पणम्। – ६/१०४/१८,१९,२०

सैन्य संख्यानम् –

अवश्यं खलु संख्यानं कर्तव्यं युद्धमिच्छता। – ६/३०/१८

परपक्षे वृद्धिक्षयस्थानं निपुणं निरूपणीयम् –

अयं च सुमहान्नादः शङ्कां जनयतीव मे।

ज्ञायतां तूर्णमेतेषां सर्वेषां च वनौकसाम्।
शोककाले समुत्पन्ने हर्षकारणमुत्थितम्।।
तथोक्तास्ते सुसम्भ्रान्ताः प्राकारमधिरुह्य च।
ददृशुः पालितां सेनां सुग्रीवेण महात्मना। — ६/११/५,७,८

योद्धव्यपक्षस्य दुर्गबलादि परिमाण ज्ञानमावश्यकम् —

कति दुर्गाणि दुर्गाया लङ्कायास्तद् ब्रवीष्व मे।
ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर।।
बलस्य परिमाणं च द्वारदुर्गक्रियामपि।
गुप्तिकर्म च लङ्काया रक्षसां सदनानि च।। — ६/३/३,४

सम्यक् तदुपलभ्य लक्ष्यसाधनाय प्रवर्तितव्यम् —

सन्तापस्य च ते स्थानं नहि पश्यामि राघव।
प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः।।
यन्निवेदयसे लङ्कां पुरीं भीमस्य रक्षसः।
क्षिप्रमेनां वधिष्यामि सत्यमेतद् ब्रवीमि ते।। — ६/२/३ : ६/४/२

## अभियानम्

अभियानकाल प्रतीक्षा —

शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः।
ततः सराष्ट्रं सगणं रावणं तं वधिष्यति।। — ४/२७/३९

अभियानावसरः —

अन्योन्यबद्धवैराणां जिगीषूणां नृपात्मज।
उद्योगसमयः सौम्य पार्थिवानामुपस्थितः।।
इयं सा प्रथमा यात्रा पार्थिवानां नृपात्मज। — ४/३०/६०

सैन्याभिनिष्क्रमणे लोकालय बाधावर्जनम् —

सरांसि च सुफुल्लानि तटाकानि वराणि च।

रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत्।।

वर्जयन् नागराभ्याशांस्तथा जनपदानपि।

सागरौघनिभं भीमं तद्वानरबलं महत्।

निःससर्प महाघोरं भीमघोषमिवार्णवम्।। – ६/४/३८,३९–४०

प्रसङ्गतः युद्धकाले वीर गर्हितानि वर्जनीयानि कार्याणि निर्दिशति –

वनं चैत्ररथं दिव्यं नलिनीं नन्दनं वनम्।

विनाशयति यः क्रोधाद् देवोद्यानानि वीर्यवान्।।

क्षेप्तारं पर्वताग्राणां सुराणा च प्रमर्दनम्।

उच्छेत्तारं च धर्माणां परदाराभिमर्शनम्।।

सर्वदिव्यास्त्रयोक्तारं यज्ञविघ्नकरं सदा।– ३/३२/१५,१६, १२,१३

अतएव सैन्याभियाने अनुशासनं प्रवर्तनीयम् –

वर्जयन् नागराभ्याशान् तथा जनपदानपि। – ६/४/३९

अभियाने सैन्यपर्याप्तता सर्वथाऽपेक्षिता –

महतीयमितः सेना सागराभा प्रदृश्यते।

नास्यान्तमभिगच्छामि मनसापि विचिन्तयन्।। – २/८४/२

मार्गे जलौघसन्तरणार्थं नौकादि प्रबन्धः –

नावः समुपकर्षध्वं तारयिष्यामि वाहिनीम्।

ते तथोक्ताः समुत्थाय त्वरितां राजशासनात्।

पञ्च नावां शतान्येव समानिन्युः समन्ततः।। – २/८९/९,१०

पताकिन्यस्तु ता नावः स्वयं दाशैरधिष्ठिताः।

वहन्त्यो जनमारूढं तदा सम्पेतुराशुगाः।। – २/८९/१६

गजसेना स्वयं सन्तरणशीलेत्याह –

सवैजयन्तास्तु गजा गजारोहैः प्रचोदिताः।

तरन्तः स्म प्रकाशन्ते सपक्षा इव पर्वताः।। – २/८९/१९

अन्तरान्तर सैन्य–शिविर व्यवस्थाऽपि स्यात्–

सर्वाः सेना निवेश्यन्तां वेलायां हरिपुङ्गव। – ६/४/१०१

सेनां न्यवेशयत् तीरे सागरस्य द्रुमायुते। – ६/४/१०३

शिविरानुशासनम् – बहिर्निर्गमनिषेधः –

स्वां स्वां सेनां समुत्सृज्य मा च कश्चित् कुतो व्रजेत्

गच्छन्तु वानराः शूरा ज्ञेयं छन्नं भयं च नः। – ६/४/१०२

विभज्य सेनाऽवस्थानम् –

सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता।

त्रिधा निविष्टा महती रामस्यार्थ पराऽभवत्।। –६/४/१०७

तथाहि –

परिगृह्योदकं शीतं वनानि फलवन्ति च।

बलौघं संविभज्येमं व्यूह्य तिष्ठाम लक्ष्मण।।

इति दाशरथी रामो लक्ष्मणं समभाषत।

बलं च तत्र विभजन् शास्त्रदृष्टेन कर्मणा।। – ६/२४/१३

'व्यूह्य तिष्ठाम' इत्युक्तिमनुसृत्य 'व्यूढानि कपिसैन्यानि' इति व्यूहरचनाप्रकारं निर्दिश्य जयमाशंसति –

तद्भवांश्चतुरङ्गेण बलेन महता वृतम्।

व्यूह्येदं वानरानीकं निर्मथिष्यसि रावणम्।। – ६/३७/२४

व्यूहरचनाप्रकारः –

'शास्त्रदृष्टेन कर्मणा' इति युद्धशास्त्रमधिकृत्य विरचनीयेषु व्यूहनिवहेषु कञ्चिदन्यतमं पुरुष–गरुडादिकं व्यूहं दृष्टान्ततया प्रदर्शयति –

शशास कपिसेनां तां बलादादाय वीर्यवान्।

अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः।।

तिष्ठेद् वानरवाहिन्या वानरौघ समावृतः।

आश्रितो दक्षिणं पार्श्वमृषभो नाम वानरः।।

गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः।

तिष्ठेद् वानरवाहिन्याः सव्यं पक्षमधिष्ठितः।।

मूर्ध्नि स्थास्याम्यहं यत्तो लक्ष्मणेन समन्वितः।

जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः।।

ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः।

जघनं कपिसेनायाः कपिराजोऽथ रक्षतु।।

सुविभक्ता महाव्यूहा महावानररक्षिता।

अनीकिनी सा विबभौ यथा द्यौः साभ्रसंप्लवा।। – ६/२४/१४–१९

गरुडव्यूहमास्थाय सर्वतो हरिभिर्वृतः।

मां विसृज्य महातेजा लङ्कामेवातिवर्तते।। – ६/२०/१२

प्रत्यभियानम् –

परपक्षेणाऽपि प्रत्यभियानोद्योगः प्रदर्श्यते –

अब्रवीद् दूषणं नाम खरः सेनापतिस्तदा।।

चतुर्दश सहस्राणि मम चित्तानुवर्तिनाम्।

रक्षसां भीमवेगानां समरेष्वनिवर्तिनाम्।।

नीलजीमूतवर्णानां लोकहिंसा विहारिणाम्।

सर्वोद्योगमुदीर्णानां रक्षसां सौम्य कारय।। – ३/२२/७–९

अभियाने अग्रानीक व्यूहने प्रथमाक्रमिणः बलवन्तश्चेत्याह –

सागरौघनिभं भीममग्रानीकं महाबलाः।

कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः।।

गजश्च गिरिसंकाशो गवयश्च महाबलः।

गवाक्षश्चाग्रतो यातु गवां दृप्त इवर्षभः।।

यातु वानरवाहिन्या वानरः प्लवतां पतिः।

पालयन् दक्षिणं पार्श्वमृषभो वानरर्षभः।।

गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः।

यातु वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः।।

यास्यामि बलमध्येऽहं बलौघमभिहर्षयन्।

अधिरुह्य हनूमन्तमैरावतमिवेश्वरः।।

अङ्गदेनैव संयातु लक्ष्मणश्चातिकोपनः।

जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः।।

ऋक्षराजो महाबाहुः कुक्षिं रक्षन्तु ते त्रयः। – ६/४/१४–२०

व्यूढानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो।। – ६/४/५४

अभियाने मार्गनिरीक्षणम् –

अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम्।

दूषयेयुर्दुरात्मानः पथि मूलफलोदकम्।

राक्षसाः पथि रक्षेथास्तेभ्यस्त्वं नित्यमुद्यतः।।

निम्नेषु वन दुर्गेषु वनेषु च वनौकसः।

अभिप्लुत्याभिपश्येयुः परेषां निहितं बलम्।। – ६/४/९,११,१२

मार्गपरिवृतैः सद्भिर्गन्तव्यम्, यथा –

स्वैः स्वैः परिवृताः सैन्यैर्वर्तन्ते पथि राघव।। – ४/३९/२९

रथादि सञ्चालने सारथिकृतं स्थलनिरीक्षणं, यथा –

स्थलनिम्नानि भूमेश्च समानि विषमाणि च।

युद्धकालश्च विज्ञेयः परस्यान्तरदर्शनम्।।

उपयानापयाने च स्थानं प्रत्यपसर्पणम्।

सर्वमेतद् रथस्थेन ज्ञेयं रथकुटुम्बिना।।

तव विश्राम हेतोस्तु तथैषां रथवाजिनाम्।

रौद्रं वर्जयता खेदं क्षमं कृतमिदं मया।। – ६/१०४/१९–२१

अभियान साफल्ये सैनिकेभ्यः पुरस्कार प्रदानम् –

त इमे कृतकर्माणः सर्व एव वनौकसः।

धन–रत्नप्रदानैश्च कर्मैषां सफलं कुरु।। – ६/२०/६

अभियानिनां सैनिकानां कदाचिद् यथेच्छ विहारादि प्रसङ्गः –

स्नात्वा पीत्वोदकान्यत्र जले क्रीडन्ति वानराः।

फलान्यमृतगन्धीनि मूलानि कुसुमानि च।

ययुः पिबन्तः स्वस्थास्ते मधूनि मधुपिङ्गलाः।। – ६/४/८६–८८

## रण–प्रसङ्गः

सैन्यमहत्त्वम् –

युज्यतां महती सेना चतुरङ्गबलान्विता। – २/७९/९

शस्त्रास्त्र महत्त्वम् –

बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे।

रामस्यास्त्रबलं चैव शत्रोर्निधनकांक्षिणः।।

प्रादुर्बभूवुरस्त्रापि सर्वाणि विदितात्मनः।

प्रहर्षाच्च महातेजाः शीघ्रहस्ततरोऽभवत्।। – ६/५४/२४, २५

विजिगीषोरुत्साहः –

अद्यैव चित्रकूटस्य काननं निशितैः शरैः।

छिन्दन् शत्रुशरीराणि करिष्ये शोणितोक्षितम्।। – २/९७/२८–२९

शराणां धनुषश्चाहमनृणोऽस्मिन् महाहवे।

रथैश्चित्रैर्ध्वजैरश्वैः शरीरैर्हरिरक्षसाम्।। – ६/१३/३०

युद्धे प्रवर्त्स्यतो जिगीषोः प्रसन्नता जयप्रदा, निष्प्रभता च क्षयावहेति लक्ष्यते –

सन्निकर्षे तु नः शूर जयं, शत्रोः पराजयम्।

सुप्रभं च प्रसन्नं च तव वक्त्रं हि लक्ष्यते।।

उद्यतानां हि युद्धार्थं येषां भवति लक्ष्मणं।

निष्प्रभं वदनं तेषां भवत्यायुः परिक्षयः।। – ३/२४/८, ९

विपक्षे युद्धोत्तेजनाय जिगीषोर्नायकस्य व्याहारव्यापारः –

नैवान्तरिक्षं न दिशो न च द्यौर्नापि सागराः।
प्रकाशत्वं गमिष्यन्ति मद्बाणजलदावृताः।।
अद्य वानर सैन्यानि रथेन पवनौजसा।
धनुः समुद्रादुद्भूतैर्मथिष्यति शरोर्मिभिः।।
व्याकोश पद्मवक्त्राणि पद्मकेसर वर्चसाम्।
अद्य यूथतटाकानि गजवत् प्रमथाम्यहम्।।
अद्य मद्बाणनिर्भिन्नैः प्रस्तीर्णैर्गतचेतनैः।
करोमि वानरैर्युद्धे यत्नावेक्ष्यतलांमहीम्। – ६/९५/१२,१४,१५,१९

विजयार्थमभियियासौ नायके सैनिकैरसैनिकैर्वा जयास्था स्थापनीया –

अस्मिन् काले महावाहो जयाशा त्वयि मे स्थिता।। – ६/९७/४

प्रोत्साहनक्रमे विजयपरिणामकं पूर्ववृत्तमुदाहर्तव्यम् –

मया त्वियं बाहुबलेन निर्जिता पुरा पुरी वैश्रवणेन पालिता।।
– ६११३/२१

तथाहि –

त्वया भोगवतीं गत्वा निर्जिताः पन्नगा युधि।।
कैलासशिखरावासी यक्षैर्बहुभिरावृतः।
सुमहत् कदनं कृत्वा वश्यस्ते धनदः कृतः।।
स महेश्वरसख्येन श्लाघ्यमानस्त्वया विभो।
निर्जिताः समरे रोषाल्लोकपालो महाबलः।।
विनिपात्य च यक्षौघान् विक्षोभ्य विनिगृह्य च।
त्वया कैलासशिखराद् विमानमिदमाहृतम्।।
दानवेन्द्रो महाबाहो वीर्योत्सिक्तो दुरासदः।
विगृह्य वशमानीतः कुम्भीनस्याः सुखावहः।।

निर्जितास्ते महाबाहो नागा गत्वा रसातलम्। (इत्यादि)—६/७/३–९

मित्रसाहाय्यस्य महत्त्वम् —

अहं सखा ते काकुत्स्थ प्रियः प्राणो बहिश्चरः।
गरुत्मानिह संप्राप्तो युवयोः साह्यकारणात्।।
भवत्प्रसादाद् व्यसनं रावणिप्रभवं महत्।
उपायेन व्यतिक्रान्तौ शीघ्रं च बलिनौ कृतौ।। — ६/५०/४२

युद्धे प्रवर्तिते नागरिकेष्वपि सैनिकसाहाय्यायोत्साहोऽप्यपेक्ष्यते —

एकैकस्यात्र युद्धार्थे राक्षसस्य विशांपते
परीवारः सहस्राणां सहस्रमुपतिष्ठति।। — ६/३७/१८

## सैन्यशिविरव्यवस्था

कृतसैन्यविभागैर्यूथपैः सैन्ययूथानि नियोज्यानि —

तान्यनीकानि सर्वाणि विभक्तानि समन्ततः।
विन्यस्ता यूथपाश्चैव यथान्यायं विभागशः।। — ६/८५/५
यूथपा यूथपश्रेष्ठास्तेषां यूथानि भागशः।। — ६/२६/४०

स्वपक्षीय चिह्नविशेषोऽपि प्रयोजनीयः —

कृताभिज्ञान चिह्नस्त्वमनया गजसाह्वया। ४/१४/८
येन त्वामभिजानीयं द्वन्द्वयुद्धमुपागतम्।। — ४/१२/३८

प्रवृत्ते महासंग्रामे राष्ट्रपीडाऽपि क्वचिद् विधेया भवति —

ततोऽब्रवीन् महातेजाः सुग्रीवो वानरेश्वरः।
अर्थ्यं विज्ञापयंश्चापि हनूमन्तमिदं वचः।।
यतो हतः कुम्भकर्णः कुमाराश्च निषूदिताः।
इदानीमुपनिर्हारं रावणो दातुमर्हति।।
ये ये महाबलाः सन्ति लघवश्च प्लवंगमाः।
लङ्कामभिपतन्त्वाशु गृह्योल्काः प्लवगर्षभाः।।

उल्का हस्तैर्हरिगणैः सर्वतः समभिद्रुताः।

आरक्षस्थाः विरूपाक्षाः सहसा विप्रदुद्रुवुः।।

गोपुराट्ट प्रतोलीषु चर्यासु विविधासु च।

प्रासादेषु च संहृष्टाः ससृजुस्ते हुताशनम्।। — ६/७५/१—३,५,६

युद्धे हताहतानां गणना शत्रुपक्षे न कृता स्यात्, स्वपक्षीयाश्च भीता वा न स्युस्तथा त्वरितमेव शवानपाकृत्य रणनीति र्निर्वर्त्तनीया —

यदा प्रभृति लङ्कायां युध्यन्ते हरिराक्षसाः।

नदा प्रभृति मानार्थमाज्ञया रावणस्य च।।

ये हन्यन्ते रणे तत्र राक्षसाः कपिकुञ्जरैः।

हताहतास्तु क्षिप्यन्ते सर्व एव तु सागरे।। — ६/७४/७१, ७२

अथापि सहसा पर—बलस्यावज्ञा न कदाचित् कर्तव्या —

बलान्यपरिमेयानि वीर्याणि च निशाचर।

परेषां सहसाऽवज्ञा न कर्तव्या कदाचन।। — ६/९/१२

अतएव स्व—परच्छिद्र निरीक्षणपूर्वकमात्मरक्षणं सर्वतोऽधिकं लक्ष्यमस्तु —

तस्यच्छिद्राणि मार्गस्व स्वच्छिद्राणि च लक्षय।

चक्षुषा धनुषात्मानं गोपायस्व समाहितः।। — ६/५९/५०

## अथ गुल्मनिवेशः

यथाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनम्।

तत्तथाऽनुष्ठितं वीर त्वद्वाक्यसमनन्तरम्।।

तान्यनीकानि सर्वाणि विभक्तानि समन्ततः।

विन्यस्ता यूथपाश्चैव यथान्यायं विभागशः।। — ६/८५/५,६

सेनासंभाररक्षणम् —

सायुधैराक्षसेर्भीमैरभिगुप्तं समन्ततः।

लघूनां त्रासजननं पातालमिव राक्षसैः।।

अप्रमत्तैश्च सर्वत्र गुल्मे रक्ष्या पुरी त्वियम्।

सर्वतश्चाति तिष्ठध्वं स्वैः स्वैः परिवृता बलैः।।– ६/७२/१२–१४

गुल्मे प्रवेश–निर्गमव्यवस्था –

निष्क्रमो वा प्रवेशो वा ज्ञातव्यः सर्वदैव नः। – ६/७२/१३

सैन्येचाऽभिज्ञान हेतुकं स्व–पर प्रत्यय–भ्रमपरिहारार्थं स्व–रूप–चिह्नमेव धार्यमिति नियमयति –

न चैव मानुषं रूपं कार्यं हरिभिराहवे।

एषा भवतु नः संज्ञा युद्धेऽस्मिन् वानरे बले।।

वानरे एवं वशिचह्नं स्वजनेऽस्मिन् भविष्यति।

वयं तु मानुषेणैव सप्त योत्स्यामहेवयम्।। – ६/७४/३३,३४

यौद्धिकभावोद्भावनाय सैनिकवाद्यघोषः –

शङ्ख भेरी मृदङ्गानां बभूव तुमुलध्वनिः। – ६/५३/२२

ततो भेरीं समाजघ्नुर्मृदङ्गांश्चाप्यवादयन्।

दध्मुः शङ्खान् सम्प्रहृष्टाः क्ष्वेलन्त्यपि यथापुरम्।। – ६/५०/६३

शङ्ख दुन्दुभिनिर्घोषः सिंहनादस्तरस्विनाम्।

पृथिवीं चान्तरिक्षं च सागरं चाऽभ्यनादयन्।।

ततः प्रबोधिता भेर्यश्चिन्द्रपाण्डुर पुष्कराः।

हेमकोणैरभिहता राक्षसानां समन्ततः।।

विनेदुश्च महाघोषाः शङ्खाः शतसहस्रशः।

राक्षसानां सुघोराणां मुखमारुतपूरिताः।। – ६/४२/३९,३४,३५

लोकेषु युद्धोद्देशप्रचारणा, सदुद्देश समर्थनाऽपि –

स्वस्ति गोब्राह्मणानां च लोकानां चेति संस्थिताः।

जयतां राघवो युद्धे पौलस्त्यान् रजनीचरान्।। – ३/२३/२८

प्रभावितं जनमतम् --

ऋषयो देवगन्धर्वाः सिद्धाश्च सहचारणैः।

समेत्य चोचुः सहितास्तेऽन्योन्यं पुण्यकर्मणः।। ३/२३/२७

युद्धस्यानिवार्यता –

पुरस्योपनिविष्टस्य सहसा पीडितस्य च।

नान्यं युद्धात्प्रपश्यामि मोक्षं युद्धविशारद।। – ६/५७/५

परदुर्गप्रवेशार्हः –

अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम्।

कोविशेत् सुदुराधर्षां राक्षसैश्च सुरक्षिताम्।।

यो वीर्यबलसम्पन्नो न समः स्याद्धनूमतः।। – ६/१/४,५,७

अभियाने मार्ग निरीक्षणम् –

अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम्।। – ६/४/९

यतः –

दूषयेयुर्दुरात्मानः पथिमूलफलोदकम्।

राक्षसाः पथि रक्षेथास्तेभ्यस्त्वं नित्यमुद्यतः।।

निम्नेषु वन दुर्गेषु वनेषु च वनौकसः।

अभिप्लुत्याभिपश्येयुः परेषां निहितं वलम्।। – ६/४/९,११,१२

मार्गे रक्षापरिवृतैरभिगन्तव्यम् –

स्वैः स्वैः परिवृताः सैन्यैर्वर्तन्ते पथि राघव। – ४/३९/२९

मार्गे पुनारथवाजिनां विश्रामविषये –

नव विश्रामहेतोस्तु तथैषां रथवाजिनाम्।

रौद्रं वर्जयता खेदं क्षमं कृतमिदं मया।। – ६/१०४/२०–२१

पक्षीय–पक्षीय जयघोषः –

जयत्यतिबलो रामो लक्ष्मणश्च महाबलः।
राजा जयति सुग्रीवो राघवेणाभिपालितः।। – ६/४२/२०

प्रवर्तिते प्रवर्तनीये वा रणे शस्त्रास्त्र–प्रहारोऽपि स्व–परपक्षाभिज्ञानपूर्वकमेव कार्यः, तदभावे वरं परिहरणीयो भवति मूल घात संशयात् –

त्वं च सुग्रीव वाली च सदृशौ स्थः परस्परम्।
विक्रमेण च वाक्यैश्च व्यक्तिं वा नोपलक्षये।
मूलघातो न नौ स्याद्धि द्वयोरिति कृतोमया -- ४/१२/३१, ३३

युध्यतः स्वपक्षस्य साहाय्यम् --

तद्गच्छ कुरु साहाय्यं स्वबलेनाभिसंभृतः।
क्षिप्रमृक्षपते तस्य कपिश्रेष्ठस्य युध्यतः।। – ६/८३/३

यत्र–यत्र च स्वपक्षीयं बलं दुर्बलं तत्र–तत्र प्रमुख चमूपतेरुपस्थितिः प्रयोजनीया–

तत्रैव तावत्त्वरितो रथं प्रापय सारथे।
एते च बलिनो घ्नन्ति सुबहून् राक्षसान् रणे।।
एतान्निहन्तुमिच्छामि समर श्लाघिनो ह्यहम्।
एतैः प्रमाथितः सर्वं रक्षसां दृश्यते बलम्।। -- ६/५६/३,४

युद्धोपसंहारे च सर्वसैन्यप्रवर्तनम् –

कल्पन्तां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः।
अनुप्रयान्तु मां युद्धे येऽत्र शिष्टा निशाचराः।। – ६/९५/२१

युद्धभूमौ कदाचित् विपक्षसम्मोहनाय, तदुत्साहबाधनाय च मोहप्रसङ्गस्तस्य निवारणं च –

तेन मोहयता नूनमेषा माया प्रयोजिता।

विघ्नमन्विच्छता तत्र वानराणा पराक्रमे।।

त्यजैनं नरशार्दूल मिथ्या सन्तापमागतम्। – ६/८४/१५–१७

त्यज राजन्निमं शोकं मिथ्यासन्तापमागतम्।

त्वामकारण सन्तप्तं सन्तप्तहृदया वयम्।

यदियं त्यज्यतां चिन्ता शत्रुहर्षविवर्धिनी।

उद्यमः क्रियता वीर हर्षः समुपसेव्यताम् – ६/८/७–८–९

किन्तु जिह्मबुद्धया शत्रुपक्षीयः स्वसैन्यपरिसरे कोऽपि न प्रविशेत्, प्रविष्टश्चेदयं वध्य एव –

राक्षसो जिह्मया बुद्धया सन्दिष्टोऽयमिहागतः।

प्रहर्तुं त्वयि विश्वस्ते विश्वस्ते मयि वानघ।।

लक्ष्मणे वा महाबाहो वध्यः स सचिवैः सह।–६/१८/१८,१९

युद्धे प्रवृत्तेः कारणानि –

भूमिर्हिरण्यं रूपं च निग्रहे कारणानि च।–४/१७/३१

विजयिनां राज्यविस्तारक्रमः –

अयं गन्धर्वविषयः फलमूलोपशोभितः।।

सिन्धोरुभयतः पार्श्वे देशः परमशोभनः।

तं च रक्षन्ति गन्धर्वाः सायुधायुद्धकोविदाः।।

तान् विनिर्जित्य काकुत्स्थ गन्धर्वनगरं शुभम्।।

निवेशय महाबाहो स्वे पुरे सुसमाहिते।

अन्यस्य न गतिस्तत्र देशः परमशोभनः।

रोचतां ते महाबाहो नाहं त्वामहितं वदे।।

तच्छ्रुत्वा राघवः प्रीतो महर्षेर्मातुलस्य च।

उवाच बाढमित्येव भरतं चान्ववैक्षत।। –७/१००/७–१४

विजयो नहि पराजितराजवंशध्वंसकः प्रत्युत विजितराज्ये तद्वंशीय एव विधेयतया तत्र स्थापनीयः –

योहि वंशं समुत्पाट्य पार्थिवस्य निवेशने।।

न विधत्ते नृपं तत्र नरकं स हि गच्छति।। – ७/६२/१८–१९

विजयोत्तरं विजितराज्यं प्रतिव्यवहारः –

विभीषणमिमं सौम्य लङ्कायामभिषेचय। – ६/११२/९

अनुरक्तं च भक्तं च तथा पूर्वोपकारिणम्।

एष मे परमः कामो यदिमं रावणानुजम्।।

लङ्कायां सौम्य पश्येयमभिषिक्तं विभीषणम्।– ६/११२/१०–११

विजयोत्तरं सहायकेभ्य उपहार प्रदानम् –

सुग्रीवाय स्रजं दिव्यां प्रायच्छन्मनुजाधिपः। – ६/१२८/७६

वालिपुत्राय धृतिमानङ्गदायाङ्गदं ददौ। – ६/१२८/७७

अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी।। – ६/१२८/७९

अथ सा वायुपुत्राय तं हारमसितेक्षणा।। – ६/१२८/८१

सर्वेवानरवृद्धाश्च ये चान्ये वानरोत्तमाः।

वासोभिर्भूषणैश्चैव यथार्हं प्रतिपूजिताः।। – ६/१२८/८४

यथार्हं पूजिताः सर्वे कामैरत्नैश्च पुष्कलैः। – ६/१२८/८५

सैनिकानां कृते खाद्यसामग्री सहैव प्रेषणीया भवति –

शतं वाह सहस्राणां तण्डुलानां वपुष्मताम्।

अयुतं तिलमुद्गस्य प्रयात्वग्रे महाबल।।

चणकानां कुलित्थानां माषाणां लवणस्य च।

अतोऽनुरूपं स्नेहं च गन्धं संक्षिप्तमेव वा।। – ७/९७/१९,२०

प्रयोजनीयतया स्वर्णमुद्रादयोऽपि प्रेषणीयाः –

सुवर्णकोट्यो बहुला हिरण्यस्य शतोत्तराः।

अग्रतो भरतः कृत्वा गच्छत्वग्रे समाधिना।। – ७/९२/२१

रक्षाकवचादीन्यपि –

तच्छिर: सशिरस्त्राणम् .....................।

कवची सशिरस्त्राणो विप्रबद्धशरासन:।। – ६/९०/७१, ७३

सैनिकेभ्यस्तथा वृत्ति: प्रदेया यथा ते परिवारभरणाय न वैक्लव्यमनुभवेयु:, अन्यथा –

स्मरन्त: पुत्रदाराणां नित्योद्विग्ना बुभुक्षिता:।

खेदिता दु:खशय्याभिस्त्वां करिष्यन्ति पृष्ठत:।। – ४/५४/१७

अभियाने मध्यवर्तिनि राज्यस्य समुल्लंघनं विचार प्रकरणे निरूपयति –

सम्प्राप्तो मन्त्रकालोऽयं सागरस्येह लङ्घने। – ६/४/१०१

अद्य मे मरणं वाऽथ तरणं सागरस्य वा।। – ६/२१/८

प्रथमं मा भवतु तत्प्रयोग:, सामादि प्रयोगोऽपि परीक्षणीय: –

इति रामो धृतिं कृत्वा महाबाहुर्महोदधिम्।

अधिशिश्ये च विधिवत् प्रयतो नियतो मुनि:।

न च दर्शयते रूपं मन्दो रामस्य सागर:।

प्रयतेनापि रामेण यथार्हमभिपूजित:। – ६/२१/९, १२

खानित: सगरेणायमप्रमेयो महोदधि:।

कर्तुमर्हति रामस्य ज्ञाते: कर्म महोदधि:।। – ६/२१/३०–३१

परतो दण्डाभियोगोऽपि –

अबद्ध्वा सागरे सेतुं घोरेऽस्मिन्मकरालये।

लङ्कामासादितुं शक्या सेन्द्रैरपि सुरासुरै:।।

अलं कालात्ययं कृत्वा सागरोऽयं नियुज्यताम्।

यथा सैन्येन गच्छाम पुरीं रावण पालिताम्।। – ६/१९/३९,४०

अद्य युद्धेन महता समुद्रं परिशोषये।

क्षमया हि समायुक्तं मामयं मकरालय:।।

असमर्थ विजानाति धिक् क्षमामीदृशे जने।। – ६/२१/२०–२१

ततो मध्यवर्तिनो राज्ञः समुदाचारः –

सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान्।
अब्रवीत् प्राञ्जलिर्वाक्यं राघवं शरपाणिनम्।।
स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः।।
तत्स्वभावो ममाप्येष यदगाधो ह्यप्लवः।।
विधास्ये येन गन्ताऽसि विषहिष्येऽप्यहं तव।
हरीणां तरणे राम करिष्यामि यथास्थलम्।।–६/२२/२२–२७, २९

प्रत्ययार्थ प्रतीक–मुद्रा –

रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम्।
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना।। – ५/३६/२३

प्रतीकध्वजः –

........ शक्रस्य यन्त्रध्वज इवोच्छ्रितः। – २/७७/९

योद्धरथध्वजः –

विराजत्युज्ज्वलस्कन्धः कोविदारध्वजो रथे। – २/९६/१९

स्थलादि निरीक्षणम्, उपापसर्पणस्थानाभिज्ञानम् –

स्थल निम्नानि भूमेश्च समानि विषमाणि च।
युद्धकालश्च विज्ञेयः परस्यान्तर दर्शनम्।
उपयानापयाने च स्थानं प्रत्यपसर्पणम्। – ६/१०४/१९–२०

सैनिक दण्ड व्यवस्था –

संग्रामे समुपोढे च शत्रुपक्षभयङ्करे।
पलायमानो वध्येत . . . । – २/७५/३९
तीक्ष्णः प्रकृत्या सुग्रीवः स्वामिभावे व्यवस्थितः।

न क्षमिष्यति नः सर्वानपराधकृतो गतान्।—४/५३/१४

## अस्त्र—शस्त्राणि

अथ' विन्यस्तानि च योधानां बहूनि विविधानि च। ददर्शायुधजालानि...' इत्यायुधान्युपदर्शयन् प्रकरणमारभते —

तत्र सामान्यतोऽस्त्राणि —

पट्टिशान् परिधान् चक्रानृष्टीन् दण्डान्महायुधान्।
बाणजालानि शूलानि भास्वरान्कूट मुद्गरान्।।
यष्टीश्च तोमरान् पाशान् चक्राणि मुसलानि च।।—६/३१/२२—२३

शक्ति खड्गगदाकुन्तैस्तोमरैश्च निशाचराः।
पट्टिशैर्भिन्दिपालैश्च बाणपातैः समन्ततः।।
पाशमुद्गरदण्डैश्च निर्घातैश्चापरैस्तथा। — ६/७९/४,५

असिभिः पट्टिशैः शूलैर्गदाभिर्मुसलैर्हलैः।
शक्तिभिस्तीक्ष्णधाराभिर्महद्भिः कूटमुद्गरैः।।
यष्टिभिर्विविधैश्चक्रैर्निशितैश्च परश्वधैः।
भिन्दिपालैः शतघ्नीभिरन्यैश्चापि वरायुधैः।। — ६/९५/२५, २६

परिधान् पट्टिशान् शूलान् प्रासाञ्शक्ति परश्वधान्।
चापानि च सुबाणानि खड्गांश्च विपुलाम्बुभान्।। — ६/९/४

दिव्यास्त्राणि —

तानि दिव्यानि भद्रं ते ददाम्यस्त्राणि सर्वशः।
दण्डचक्रं महद्दिव्यं तव दास्यामि राघव।।
धर्मचक्रं ततोवीर कालचक्रं तथैव च।
विष्णुचक्रं तथात्युग्रमैन्द्रंचक्रं तथैव च।।
वज्रमस्त्रं नरश्रेष्ठ शैवं शूलवरं तथा।
अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव।।

ददामि ते महाबाहो ब्राह्ममस्त्रमनुत्तमम्।

गदे द्वे चैव काकुत्स्थ मोदकी–शिखरे शुभे।।

धर्मपाशमहं राम कालपाशं तथैव च।

वारुणं पाशमस्त्रं च ददाम्यहमनुत्तमम्।

अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन।।

ददामि चास्त्रं पैनाकमस्त्रं नारायणं तथा।

आग्नेयमस्त्रं दयितं शिखरं नाम नामत:।।

वायव्यं प्रथमं नाम ददामि तव चानघ।

अस्त्रं हयशिरोनाम क्रौञ्चमस्त्रं तथैव च।।

शक्ति द्वयं च काकुत्स्थ ददामि तव राघव।

कङ्कालं मुसलं घोरं कापालमथ किङ्किणीम्।–१/२७/४–१२

मायास्त्राणि यन्त्रमुखानि –

आसुरं सुमहाघोरमन्यदस्त्रं चकार स:।।

सिंह–व्याघ्र मुखांश्चापि कङ्ककंकमुखानपि।

गृध्रश्येनमुखांश्चापि शृगालवदनांस्तथा।।

ईहामृगमुखांश्चापि व्यादितास्यान् भयावहान्।

पञ्चास्याँल्लेलिहानांश्च ससर्ज निशिताञ्शरान्।।

शरान् खरमुखांश्चान्यान् वराहमुख संश्रितान्।

श्वानकुक्कुटवक्त्रांश्च मकराशी विषाननान्।।

एतांश्चान्यांश्च मायाभि: ससर्ज निशिताञ्शरान्।।–६/९९/४१–४५

अग्निदीप्तमुखान् बाणांस्तत्र सूर्यमुखानपि।

ग्रहनक्षत्रवर्णांश्च महोल्कामुखसंस्थितान्।।

विद्युज्जिह्वोपमांश्चापि ससर्ज विविधाञ्शरान्। – ६/९९/४७–४८

मायाबलादिन्द्रजिता निर्मितं क्रूरकर्मणा। – ६/५०/४८

जीवाणुजन्याः –

एते नागाः काद्रवेयास्तीक्ष्ण दंष्ट्रा विषोल्बणाः।
रक्षो माया प्रभावेण शरभूतास्त्वदाश्रयाः।। – ६/५०/४९

कामानुरूप क्रियाप्रभावजनकानि कानिचिन्मन्त्रास्त्राणि –

वैद्याधरं महास्त्रं च नन्दनं नाम नामतः।।
गान्धर्वमस्त्रं दयितं मोहनं नाम नामतः।।
प्रस्वापनं प्रशमनं दद्मि सौम्यं च राघव।
वर्षणं शोषणं चैव सन्तापन–विलापने।।
मादनं चैव दुर्धर्ष कन्दर्पदयितं तथा।
पैशाचमस्त्रं दयितं मोहनं नाम नामतः।।
तामसं नरशार्दूल सौमनं च महाबलम्।
सौरं तेजः प्रभं नाम परतेजोऽपकर्षणम्।।
सोमास्त्रं शिशिरं नाम त्वाष्ट्रमस्त्रं सुदारुणम्।
दारुणं च भगस्यापि शीतेषुमथ मानवम्।।
(एतान् राम महाबाहो कामरूपान् महाबलान्।
गृहाण परमोदारान् क्षिप्रमेव नृपात्मज।।) – १/२७/१३–२१

अस्त्र–शस्त्रशमन प्रकारोऽपि 'समः समं शमयति' इति न्यायेन –

स गान्धर्वेण गान्धर्व दैवं दैवेन राघवः।
अस्त्रं राक्षसराजस्य जघान परमास्त्रविद्।। – ६/१०२/१९

प्रसङ्गतः शस्त्रास्त्र घातविषये संक्षेपतः कतिचिदुदाह्रियन्ते क्रियाकलापाः –

प्रासैः प्रमथिताः केचिद् वानराः शोणितस्रवाः।
मुद्गरेणाहताः केचित्पतिता धरणीतले।।
परिघैर्मथिताः केचिद् भिन्दिपालैश्च दारिताः।
पट्टिशैर्मथिताः केचिद् विह्वलास्ते गतासवः।।

केचिद् विनिहता भूमौ रुधिरार्द्रा वनौकसः।

केचिद् विद्राविता नष्टाः संक्रुद्धैराक्षसैर्युधि।।

विभिन्नहृदयाः केचिदेकपार्श्वेन शायिताः।

विदारितास्त्रिशूलैश्च केचिदान्त्रैर्विनिःसृताः।। – ६/५२/१९–२२

शस्त्रास्त्र–लक्ष्यलक्षण क्रियाप्रयोग–प्रसङ्गे कतिचिदुदाहरति –

गदा –

'गदां तां बहुकण्टकाम्'। – ६/५२/४४

शक्तिः –

एषाते हृदयं भित्त्वा 'शक्तिर्लोहितलक्षणा'।

मद्बाहुपरिघोत्सृष्टा प्राणानादाय यास्यति।।

इत्येवमुक्त्वा तां 'शक्तिमष्टघण्टां' महास्वनाम्।

(मयेन माया विहिताममोघां शत्रुघातिनीम्)।। – ६/१००/२९–३०

परिघम् –

'तमायसम्' (६/९८/१३)

दूरस्थितस्य परिघं रविरश्मिसमप्रभम्।

द्वाभ्यां भुजाभ्यां संगृह्य भ्रामयित्वा च वेगवत्।।

महापार्श्वस्य चिक्षेप वधार्थं वालिनः सुतः।–६/९८/१४–१५

परश्वधम् –

करेणैकेन जग्राह सुमहान्तं परश्वधम्।

शस्त्रपरिष्कारोऽपि –

तं तैल धौतं विमलं शैलसारसमं दृढम्।। – ६/९८/१८

बाणभेदाः –

रुक्मपुङ्खैः प्रसन्नाग्रैरजोगतिभिराशुगैः।

नाराचैरर्धनाराचैर्भल्लैरञ्जलिकैरपि।

विव्याध वत्स दन्तैश्च सिंह दंष्ट्रैः क्षुरैस्तथा।।–६/४५/२३

अस्त्रव्यये बहुसाध्यता प्रशस्यते –

मुक्तेनैकेषुणा युद्धे भेत्स्यामि च शतं शतम्। – ६/९१/१७

## अमोघास्त्रम्

अमोघास्त्र परीक्षणम्, तदर्थ स्थान निर्देशः –

अमोघः क्रियतां राम ! अयं तत्र शरोत्तमः।।

तस्य तद्वचनं श्रुत्वा सागरस्य महात्मनः।

मुमोच तं शरं दीप्तं परं सागरदर्शनात्।। – ६/२२/३४–३५

प्रक्षेपण परिणामः –

तेन तन्मरुकान्तारं पृथिव्यां किल विश्रुतम्।

निपातितः शरो यत्र वज्राशनिसम प्रभः।।

ननाद च तदा तत्र वसुधा शल्यपीडिता।

तस्माद् व्रणमुखात् तोयमुत्पपात रसातलात्।

अवदारण शब्दश्च दारुणः समपद्यत।।–६/२२/३६,३७,३९

महास्त्रप्रयोगे नियन्त्रणम् –

नाऽयं मया शरः पूर्व रावणस्य वधार्थिना।

मुक्तः शत्रुघ्न भूतानां महान् ह्रासो भवेदिति।। – ७/६३/२४

अमोघमहास्त्रादि प्रयोगे मूलनाशो यथा न भवेत्तथा वर्तितव्यम् –

नोत्सृजामि महावेगं शरं शत्रु निर्वहणम्।

मूलघातो न नौ स्याद्धि द्वयोरिति कृतो मया।। – ४/१२/३२,३३

अतो हि यत्र–तत्र यदा–तदा दिव्यास्त्रादि प्रयोक्तारं यज्ञविघ्नदं निरूपयति –

सर्वदिव्यास्त्रयोक्तारं यज्ञविघ्नकरं सदा। – ३/३२/१३

## युद्धभेदाः

द्वन्द्वयुद्धम् –

एतस्मिन्नन्तरे तेषामन्योऽन्यमभिधावताम्।
रक्षसां वानराणां च द्वन्द्व युद्धमवर्तत।। – ६/४३/५

तलैरशनि कल्पैश्च वज्रकल्पैश्च मुष्टिभिः।
जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्च्छितौ।। – ४/१२/१८

मल्लयुद्धम् –

मुष्टिभिर्जानुभिः पद्‌भिर्बाहुभिश्च पुनः पुनः।
तयोर्युद्धमभूद् घोरं वृत्रवासवयोरिव ।। – ४/१६/२९

दुर्गयुद्धम् –

राक्षसास्त्वपरे भीमाः प्राकारस्थान् महींगताः।
वानरान् भिन्दिपालैश्च शूलैश्चैव व्यदारयन्।।
वानराश्चापि संक्रुद्धाः प्राकारस्थान् महींगताः।
राक्षसान् पातयामासुः खमाप्लुत्य स्वबाहुभिः।। – ६/४/४५, ४६

प्रच्छन्नयुद्धम् –

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम्।
वृक्षैरात्मानमावृत्य ह्यतिष्ठन् गहने वने।। – ४/१२/१४
त्वयाऽदृश्येन तु रणे निहतोऽहं दुरासदः।। – ४/१७/४८

निशायुद्धम् –

अन्योन्यं बद्धवैराणां घोराणां जयमिच्छताम्।
सम्प्रवृत्तं निशायुद्धं तदा वानर रक्षसाम्।।
राक्षसोऽस्तीति हरयो वानरोऽस्तीति राक्षसाः।
अन्योऽन्यं समरे जघ्नुस्तस्मिंस्तमसि दारुणे।। – ६/४४/२,३

कूटयुद्धम् –

प्रकाशरूपस्तु यदा न शक्तस्तौ बाधितुं राक्षसराजपुत्रः।

मायां प्रयोक्तुं समुपाजगाम बबन्ध तौ राजसुतौ दुरात्मा।।–६/४४/३९

मायया संवृतस्तत्र मोहयन् राघवौ युधि।

अदृश्यः सर्वभूतानां कूटयोधी निशाचरः।। – ६/४४/३६–३७

प्रकृत्या राक्षसाः सर्वे संग्रामे कूटयोधिनः। – ६/५०/५३

न्याययुद्धम् –

शूराणां शुद्धभावानां भवतामार्जवं बलम्।। – ६/५०/५३

अन्याययुद्धम् –

अथाध्वनि परिश्रान्तमर्धरात्रे स्थितं बलम्।

सुखसुप्तं समासाद्य चरितं प्रथमं चरैः।।

बलमस्य हृतं रात्रौ . . .। – ६/३१/२०–२१

यथा त्वया कृतं कर्म भीरुणा लोक गर्हितम्।

तस्कराचरितो मार्गो नैष वीरनिषेवितः।।–३/५१/२९

असमयुद्धम् –

भूमौ स्थितस्य रामस्य रथस्थस्य च रक्षसः।

न समं युद्धमित्याहुर्देवगन्धर्वकिन्नराः।। – ६/१०२/५

अनिवार्ययुद्धम् –

पुरस्योपनिविष्टस्य सहसा पीडितस्य च।

नान्यं युद्धात्प्रपश्यामि मोक्षं युद्धविशारद।।–६/५७/५

निर्णायकं युद्धम् –

अस्मिन् मुहुर्ते न चिरात् सत्यं प्रतिशृणोमि वः।

अरावणमरामं वा जगद् द्रक्ष्यथ वानराः।। – ६/१००/४८

## सेना–प्रकारः

स्थलसेना –

गजानां दशसाहस्रं रथानामयुतं तथा।

हयानामयुते द्वे च साग्रां कोटिं च रक्षसाम्।। – ६/३७/१६

जलसेना –

नावां शतानां पञ्चानां कैवर्तानां शतं शतम्।

सन्नद्धानां तथा यूनां तिष्ठन्त्वित्यभिचोदयत्।। – २/८४/८

वायुसेना –

बलञ्चाकाशमावृत्य सर्वतो दशयोजनम्। – ६/२०/६

कामगं स्यन्दनं दिव्यमन्तरिक्षचरं ध्रुवम्।

राक्षसां प्रययु: सर्वे कृत्वाकाशं निरन्तरम्। – ७/२५/१०/३७

स्थलसैन्य चतुरङ्गिणी सेना –

सामरिक प्रसङ्गे स्थलयुद्धस्य मुख्यतया तदर्थं योजितां चतुरङ्गिणीं सेनां विश्लेषयन्नाह –

बलेन चतुरङ्गेण स्वयमेत्य निशाचरम्। – ३/३८/७

गजानां बृंहितै: सार्धं हयानां ह्रेषितैरपि।

रथानां नेमिनिर्घोषै रक्षसां भवनस्वनै:।। – ६/४२/४०

विविधान्यपि यानानि महान्त्यपि लघूनि च।

प्रययु: सुमहार्हाणि पादैरपि पदातय:।। – २/९२/३५

अथ चतुरङ्गिणी यथायथं विवृणुते। तत्र रथा: –

एतस्मिन्नन्तरे सूत: स्थापयामास तं रथम्।

दिव्यास्त्रवरसम्पन्नं नानालङ्कारभूषितम्।।

नानायुधसमाकीर्णं किङ्किणीजाल संयुतम्।।

द्रुतं सूतसमायुक्तं युक्ताष्ट–तुरंग रथम्।

आरुरोह तदा भीमं दीप्यमानं स्वतेजसा।।–६/९५/२९–३०,३३

गजाः –

विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि।

मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः।।

ऐरावतकुलीनैश्च महापद्म कुलैस्तथा।

अञ्जनादपि निष्क्रान्तैर्वामनादपि च द्विपैः।।

नित्यमत्तैः सदा पूर्णा नागैरचलसन्निभैः।।–१/६/२३–२४, २६

हयाः –

काम्बोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः।

वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः।। – १/६/२२

पदातयः –

योधानामग्निकल्पानां पेशलानाममर्षिणाम्।

सम्पूर्ण–कृतविद्यानां गुहा केसरिणामिव।। – १/६/२१

खड्गैश्चक्रैर्गदाभिश्च निशितैश्च परश्वधैः।

पदातयश्च निर्यान्ति विविधाः शस्त्रपाणयः।। – ६/५३/९

एवं हि समष्टि रूपेण सुसज्जिता चतुरङ्गिणी सेना समराय प्रभवतीत्याह –

रथैः कवचिनस्त्वन्ये ध्वजैश्च समलङ्कृतैः।

सुवर्णजालविहितैः खरैश्च विविधाननैः।।

हयैः परमशीघ्रैश्च गजैश्चैव मदोत्कटैः।

निर्ययुर्नैऋतव्याघ्रा व्याघ्रा इव दुरासदाः।।–६/५१/२६, २७

बलमुद्योजयामास रावणस्याज्ञया भृशम्।–४/५१/२२

एषांहि चतुर्णां सेनाङ्गानां चत्वारो बलाध्यक्षाः स्युर्निहितेति बोधयति –

अथानयन् बलाध्यक्षाश्चत्वारो रावणाज्ञया। – ६/९५/२७

सैनिक–वेशभूषा –

सन्नद्धः कवची खड्गी सशरी वामचापभृत्।–६/८५/२५

शिरस्त्राणं च (पातयत्) . . . । –६/९८/१६

किञ्च –

आसाद्य कवचं दिव्यं सहस्रार्कसमद्युति।
आवद्ध्य शरःसम्पूर्णे इषुधी विमले तदा।।

श्रोणिसूत्रश्च खड्गश्च विमलं कमलेक्षणः।

शङ्खचक्रगदा शाङ्र्गानन्यांश्चैव वरायुधान्।।

बद्धगोधाङ्गुलित्रश्च अवध्यकवचो युधि। – ६/१९/१२

विविधायुधहस्ताश्च शूलमुद्गरपाणयः।

गदाभिः परिघैर्दण्डैरायसैर्मुसलैरपि।।

परिघैर्भिन्दिपालैश्च भल्लैः पाशैः परश्वधैः।। – ६/५१/२४–२५

सैन्यवाहनानि –

नागैरश्वैः खरैरुष्ट्रैः संयुक्तः सुसमाहितः।

ते हयैः काञ्चनापीडैर्गजैश्चाग्नि शिखोपमैः।

रथैश्चादित्य संकाशैः कवचैश्च मनोरमैः।

निर्ययू राक्षसा वीरा नादयन्तो दिशो दश।।–६/४३/२,३

सांग्रामिको रथः . . . । –३/६७/१८

यानशाला –

यानशालां ततो गत्वा प्रच्छन्नं राक्षसाधिप।

सूतं संचोदयामास रथः संयुज्यतामिति।। – ३/३५/४

चतुःशालानि शुभ्राणि शालाश्च गजवाजिनाम्।–२/९१/२९

## युद्धे व्यसनानि

यथा –

प्रक्षीणं स्वबलं दृष्ट्वा वध्यमानं वलीमुखैः।

बभूवास्य व्यथा युद्धे दृष्ट्वा दैवविपर्ययम्।।–६/९७/३

वाहिनीपतेर्व्यसने स्थिति: –

न शेकु: समवस्थातुं निहते वाहिनीपते:।

सेतुबन्धं समासाद्य विशीर्णं सलिले यथा।। – ६/५८/५८

नायके प्रपीडिते करणीयमाह –

अथवा रक्ष्यतां रामो यावत् संज्ञाविपर्यय:।

लब्धसंज्ञौहि काकुत्स्थौ भयं नो व्यपनेष्यत:।।

तस्मादुत्सृज्य वैकल्यं सर्वकार्य विनाशनम्।

हितं रामपुरोगाणां सैन्यानामनुचिन्तय।।

समाश्वास्य तु सुग्रीवं राक्षसेन्द्रो विभीषण:।

विद्रुतं वानरानीकं तत्समाश्वासयत् पुन:।।–६/४६/३९,३८,४४

तत्र रक्षाप्रकार: –

राघवं परिवार्याऽथ ररक्षुर्वानरर्षभा:। ६/४७/१

आसन्ने च विनाशे रणादपसरणमप्युचितम् –

यदा च शस्त्रं नारेभे न चकर्ष शरासनम्।

नास्य प्रत्यकरोद् वीर्यं विक्लवेनान्तरात्मना।।

क्षिप्ताश्चाशु शरास्तेन शस्त्राणि विविधानि च।

मरणार्थाय वर्तन्ते मृत्युकालोऽभ्यवर्तत।।

सूतस्तु रथनेताऽस्य तदवस्थं निरीक्ष्य तम्।

शनैर्युद्धादसम्भ्रान्तो रथं तस्यापवाहयत्।।–६/१०३/२८–३०

रथं च तस्याऽथ जवेन सारथि–

निर्वार्य भीमं जलदस्वनम् तथा।

जगाम भीत्या समरान्महीपतिं

निरस्तवीर्यं पतितं समीक्ष्य।।–६/१०३/३१

शत्रोर्भीषणाक्रमणे दुर्गद्वार पिधानम् –

अहो सुबलवान् रामो महदस्त्रबलं च वै।

तद्भयाद्धि पुरी लङ्का पिहितद्वारतोरणा।।–६/७२/१०–११

अपलायनं वीर धर्म मन्यमानेनापि वीरो रक्षार्थं तत्कर्तव्यमिति पुष्यति –

न भीतोऽस्मि न मूढोऽस्मि नोपजप्तोऽस्मि शत्रुभिः।

मया तु हितकामेन यशश्च परिरक्षता।

स्नेह प्रसन्न मनसा हितमप्यप्रियं कृतम्।।–६/१०४/११,१२

युद्धव्यसने समाश्वासनं युद्धोद्योगे समुत्तेजनमिव सर्वथोपयुज्यते –

अलं त्रासेन सुग्रीव वाष्पवेगो निरुध्यताम्।।

एवं प्रायाणि युद्धानि विजयो नास्ति नैष्ठिकः।

सभाग्यशेषताऽस्माकं यदि वीर भविष्यति।।

मोहमेतौप्रहास्येते महात्मानौ महाबलौ।

पर्यवस्थाप्रयात्मानं नास्ति मृत्युकृतं भयम्।। – ६/४६/३१–३३

न कालः कवि राजेन्द्र वैक्लव्यमवलम्बितुम्।

अतिस्नेहोऽपि कालेऽस्मिन् मरणायोपकल्पते।।

तस्मादुत्सृज्य वैक्लव्यं सर्वकार्य विनाशनम्।

हितं रामपुरोगाणां सैन्यानामनुचिन्तय।। – ६/४६/३६,३७

तस्मादाश्वासयात्मानं बलं चाश्वासय स्वकम्।

यावत् सैन्यानि सर्वाणि पुनः संस्थापयाम्यहम्।। – ६/४६/५०

एतेषां समाश्वासन प्रकारः –

हतो भ्राता च येषां वै येषां च तनयो हतः।

वधेनाद्यरिपोस्तेषां करोम्यश्रु प्रमार्जनम्।। – ६/९६/१

सैन्य समाश्वासनम् –

विद्रुतं वानरानीकं तत्समाश्वासयत् पुनः। – ६/४६/४३

करिष्यामि प्रतीकारमद्य शत्रुवधादहम्।। – ६/४५/११

व्यसने युद्धरोधोऽपि क्वचिदावश्यको जायते –

संनिवार्य परानीकमब्रवीत् तान् वनौकसः।।

हनूमान् 'संनिवर्तध्वं' न नः साध्यमिदं बलम्।। ६/८२/२०–२१

रणे पलायनदृश्यम् –

विषण्णवदना ह्येते त्यक्तप्रहरणा दिशः।

पलायन्तेऽत्र हरयस्त्रासादुत्फुल्ललोचनाः।।

अन्योन्यस्य न लज्जन्ते न निरीक्षन्ति पृष्ठतः।

विप्रकर्षन्ति चाऽन्योन्यं पतितं लंघयन्ति च।। – ६/५०/५,६

रणे पलायनदृश्यमाह –

तं दृष्ट्वा निहितं भूमौ राक्षसेन्द्रमकम्पनम्।

व्यथिता राक्षसाः सर्वे क्षितिकम्प इव द्रुमाः।

अन्योऽन्यं ते प्रमथ्नन्तो विविशुर्नगरं भयात्।

पृष्ठतस्तेहि संमूढाः प्रेक्षमाणा मुहुर्मुहुः।। – ६/५६/३१,३४

येन येन च गच्छन्ति राक्षसा भयकर्षिताः।

तेन तेन स्म पश्यन्ति राममेवाग्रतः स्थितम्।। – ३/३१/२०

अपि च –

मम पुत्रो मम भ्राता मम भर्ता रणे हतः।

इत्येष श्रूयते शब्दो राक्षसीनां कुले कुले।।

हत प्रवीरा रामेण निराशा जीविते वयम्।

अपश्यन्तो भयस्यान्तमनाथा विलपामहे।। – ६/९४/२२,२५

युद्धे हन्तव्याऽहन्तव्य प्रसङ्गे –

बालवृद्धावशेषां तु लङ्कां कृत्वा शरोर्मिभिः।

रावणं तु रिपुं हत्वा सीतां त्वमुपलप्स्यसे।। – ६/५०/५८

एका कथंचिन्मुक्ताऽहं परिभूय महात्मना।

स्त्रीवधं शङ्कमानेन रामेण विदितात्मना।।

बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम्।

न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप।।

आर्तो वा यदि वा तृप्तः परेषां शरणं गतः।

अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना।।

आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः।।–६/१८/२७,२८–३०

अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम्।

पलायमानं मत्तं वा न हन्तुं त्वमिहार्हसि।।–६/८०/३९

शरणागत रक्षा –

सकृदेव प्रपन्नाय तवास्मीति प्रयाचते।

अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम।। – ६/१८/३३

अन्यथा –

स चेद् भयाद् वा मोहाद् वा कामाद् वा न रक्षति।

स्वया शक्त्या यथान्यायं तत्पापं लोकगर्हितम्।।

एवं दोषो महानत्र प्रपन्नानामरक्षणे।

अस्वर्ग्यं चायशस्यं च बलवीर्य विनाशनम्। – ६/१८/२९, ३१

शरणागत रक्षागाथा –

श्रूयते हि कपोतेन शत्रुः शरणमागतः।

अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः।।

ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा।

शृणु गाथा पुरा गीता धर्मिष्ठा सत्यवादिना।।–६/१८/२४, २६

युद्धविरतमनसां भीतानां संहारो यौद्धिकानामनर्हः –

नारायण न जानीषे क्षात्रधर्मं पुरातनम्।

अयुद्धमनसो भीतानस्मान् हंसि यथेतरः।।

पराङ्मुखवधं पापं यः करोति सुरेश्वर।

स हन्ता न गतः स्वर्गं लभते पुण्यकर्मणाम्।। – ७/८/३,४

## हताहतानां चिकित्सोपचार विधानम्

हताहतानां लक्षणपरिज्ञानम् –

अथवा रक्ष्यतां रामो यावत् संज्ञा–विपर्ययः।

नैतत् किञ्चन रामस्य न च रामो मुमूर्षति।

न ह्येनं हास्यते लक्ष्मीर्दुर्लभा या गतायुषाम्।।–६/४६/३९–४०

साधारणमोहमूर्च्छाप्रसङ्गे प्रथमोपचारक्रिया –

ततः सलिलमादाय विद्यया परिजप्य च।

सुग्रीवनेत्रे धर्मात्मा प्रममार्ज विभीषणः।। – ६/४६/३५

मृतामृतपरीक्षणे –

नैव पञ्चत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः।।

न ह्यस्य विकृतं वक्त्रं न च श्यामत्वमागतम्।

सुप्रभं च प्रसन्नं च मुखमस्य निरीक्षताम्।।

पद्मपत्रतलौ हस्तौ सुप्रसन्ने च लोचने।

नेदृशं दृश्यते रूपं गतासूनां विशांपते।।

सोच्छ्वासं हृदयं वीर कम्पमानं मुहुर्मुहुः। – ६/१०१/२५/२७,२९

प्रायेण गत सत्त्वानां पुरुषाणां गतायुषाम्।।

दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम्।।– तत्रैव

रणभूमौ हताहतानामुज्जीवनाय निर्व्रणीकरणाय च चिकित्साप्रबन्धो विधेय इति, समुदाहरति –

तानार्तान्नष्ट संज्ञांश्च गतासूंश्च बृहस्पतिः।

विद्याभिर्मन्त्रयुक्ताभिरोषधीभिश्चिकित्सति।। – ६/५०/२८

हरयस्तु विजानन्ति पार्वतीं ते महौषधिम्।
सञ्जीवकरणीं दिव्यां विशल्यां देवनिर्मिताम्।। – ६/७४/३३
विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा।
सञ्जीवकरणीं वीर सन्धानीं च महौषधीम्।।–६/१०१/३२

चिकित्साविधि: –

विशल्योऽयं महाप्राज्ञ: सौमित्रिर्मित्रवत्सल:।
यथाभवति स स्वस्थस्तथा त्वं समुदाचर।।
विशल्य: क्रियतां क्षिप्रं सौमित्रि: सविभीषण:।
ऋक्षवानरसैन्यानां शूराणां द्रुमयोधिनाम्।।
ये चाप्यन्येऽत्र युध्यन्ति सशल्या व्रणिनस्तथा।
तेऽपि सर्वे प्रयत्नेन क्रियतां सुखिनस्तथा।।
एवमुक्त: स रामेण महात्मा हरियूथप:।
लक्ष्मणाय ददौ नस्त: सुषेण: परमौषधम्।।
स तस्य गन्धमाघ्राय विशल्य: समपद्यत।
तथा निर्वेदनश्चैव संरूढव्रण एव च।।
विभीषणमुखानां च सुहृदां राघवाज्ञया।
सर्ववानर मुख्यानां चिकित्सामकरोत्तदा।।
तत: प्रकृतिमापन्नो हतशल्यो गतक्लम:।
सौमित्रिर्मुमुदे तत्र क्षणेन विगतज्वर:।। – ६/९१/२१–२७

सर्वे विशल्या विरुजा: क्षणेन
हरि प्रवीराश्च हताश्च ये स्यु:।
गन्धेन तासां प्रवरौषधीनां
सुप्ता निशान्तेष्विव सम्प्रबुद्धा:।।–६/७४/७४

युद्धभूमौ निहतानां संस्कारात्मिका सत्क्रिया —

नैकान्त विजयो युद्धे भूतपूर्वः कदाचन।
परैर्वा हन्यते वीरः परान् वा हन्ति संयुगे।।
इयं हि पूर्वैः सन्दिष्टा गतिः क्षत्रिय सम्मता।
क्षत्रियो निहतः संख्ये न शोच्य इति निश्चयः।।—६/१०९/१७—१८

मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम्।
क्रियतामस्य संस्कारो ममाप्येष यथा तव।।
त्वत्सकाशान् महाबाहो संस्कारं विधि पूर्वकम्।
क्षिप्रमर्हसि धर्मेण त्वं यशोभाग् भविष्यसि।।—६/१११/१००—१०२

## युद्ध—परिषद्

युद्धकाले सामरिकनीतिसञ्चालनार्थं उच्चस्तरीया युद्धपरिषत् स्थापनीया, पारिषदैश्च परामर्शः सर्वथोपयुज्यते—

तत्त्वं बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः।
मद्विधैः सचिवैः सार्धमरिं जेतुं समर्हसि।। — ६/२/१६

तस्मिन्नेवंविधे कार्ये विरुद्धे वानरैः सह।
**हितं पुरे च सैन्ये च सर्वं संमन्त्र्यतां मम।।—६/६/१८**

परे पारे समुद्रस्य पुरस्कृत्य नृपात्मजौ।
भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतं चाभिधीयताम्।। — ६/१२/२४—२५

दुर्नेयाः कार्यगतयो ब्रूत यस्य यथामति।
भवद्भिरहमत्यर्थं वृतः श्रियमवाप्नुयाम्।।—६/१२/९

सर्वं कृत्यानि युष्माभिः समारब्धानि सर्वदा।
मन्त्रकर्मनियुक्तानि न जातु विफलानि मे।।—६/१२/८

अहं तु खलु सर्वान् वः समर्थयितुमुद्यतः।—६/१२/१०

मन्त्रकाल–क्रमादि विषया: –

सम्प्राप्तो मन्त्रकालो न: सागरस्येह लङ्घने। – ६/४/१०१

अमित्रविषयं प्राप्ता: समवेता: समर्थयन्। – ६/३७/३

विभीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते। – ६/१९/३५

अहं तस्य प्रभावज्ञो न युद्धं तेन ते क्षमम्। – ३/३९/१

तस्य छिद्राणि मार्गस्व स्वच्छिद्राणि च लक्षय।

चक्षुषा धनुषात्मानं गोपायस्व समाहित:।। – ६/५९/५०

आर्तनादा: –

मम पुत्रो मम भ्राता मम भर्ता रणे हत:।

इत्येष श्रूयते शब्दो राक्षसीनां कुले कुले।।

रथाश्वनागाश्च हतास्तत्र तत्र सहस्रश:।

रणे रामेण शूरेण हताश्चापि पदातय:।।

हत प्रवीरा रामेण निराशा जीविते वयम्।

अपश्यन्तो भयस्यान्तमनाथा विलपामहे।। – ६/९४/२२,२३,२५

भयात् पलायितानां सैनिकानां पुनरुत्साहनाय सेनान्य: पुरतोगमनम् –

पृष्ठतोऽनुव्रजध्वं मामग्रतो यान्तसाहवे।

शूरैरभिजनोपेतैरयुक्तं हि निर्वतनम्।। – ६/८२/४

तथैवस्थितिमवलोक्य पुन: साहसाद् वर्जनमपि –

संनिवार्य परानीकमब्रवीत् तान् वनौकस:।

हनूमान्, संनिवर्तध्वं न न: साध्यमिदं बलम्।। – ६/८२/२०–२१

रणस्थले सहसा निष्क्रमणं रोधयति –

वीर ते शत्रुबाहुल्यं फल्गुता वा न विद्यते।

सहसा तव निष्क्रामो मम तावन्न रोचते।। – ४/१५/८५

प्रतिनिवृत्तः शत्रुकृतमाह्वानं तत्प्रतीकारार्थमभिगमनं कदाचिद् भवति शङ्काजनकम्—

त्वया तस्य निरस्तस्य पीडितस्य विशेषतः।
इहैत्य पुनराह्वानं शङ्कां जनयतीव मे।।
दर्पश्च व्यवसायश्च सदृशस्तस्य नर्दतः।
निनादस्य च संरम्भो नैतदल्पं हि कारणम्।। — ४/१५/११,१२

युद्धनिमित्तक लक्ष्यनाशप्रसङ्गे किङ्कर्तव्यतायां करणीयमाह —

यन्निमित्तं हि युध्यामो हता सा जनकात्मजा।
इममर्थं हि विज्ञाप्य रामं सुग्रीवमेव च।
तौ यत् प्रतिविधास्येते तत्करिष्यामहे वयम्। — ६/८२/२२, २३

ooo

# पञ्चमं जन—जनपद काण्डम्

## जनपद निवेशः

प्राज्यकामा जनपदाः सम्पन्नतरगोरसाः। ३/१६/७

उदाहरति —

कोसलोनाम मुदितः स्फीतो जनपदो महान्।
निविष्टः सरयूतीरे प्रभूत धनधान्यवान्।। १/५/५

निविष्ट शूरसेनानां विषयश्चाकुतोभयः।
क्षेत्राणि सस्ययुक्तानि काले वर्षति वारिदः।
अरोगवीर पुरुषा शत्रुघ्नभुजपालिता।। ७/७०/९—१०

ततो धान्यधनोपेतान् दानशीलजनान् शिवान् ।।
अकुतश्चिद्भयान् रम्यांश्चैत्ययूपसमावृतान्।।
उद्यानाम्रवणोपेतान् सम्पन्नसलिलाशयान्।
हृष्ट—पुष्ट जनाकीर्णान् गोकुलाकुलसेवितान्।।
रक्षणीयान् नरेन्द्राणां ब्रह्मघोषाभिनादितान्।
रथेन पुरुषव्याघ्रः कोसलानत्यवर्तत।। २/५०/८—१०

अयं गन्धर्वविषयः फलमूलोपशोभितः।
सिन्धोरुभयतः पार्श्वे देशः परमशोभनः।। ७/१००/१०—११

जनपद नाम व्यपदेशः। दिशि—दिशि च स्थितानि जनपदानि मध्यपूर्वपश्चिमोत्तरदक्षिणक्रमेण निर्दिश्यन्ते —

ब्रह्ममालान् विदेहांश्च मालवान् काशि—कोसलान्।
मागधांश्च महाग्रामान् पुण्ड्रांस्त्वङ्गांस्तथैव च।।— ४/४०/२२—२३
मेखलानुत्कलांश्चैव दशार्णनगराण्यपि।

आव्रजन्तीमवन्तींश्च सर्वमेवानुपश्यत।।

विदर्भानृष्टकांश्चैव रम्यान् माहिषकाणि च।

तथा वङ्गान्कलिङ्गांश्च कौशिकांश्च समन्ततः।।— ४/४१/९–१०

सौराष्ट्रान् सह वाह्लीकान् चन्द्रचित्रांस्तथैव च। — ४/४२/६

तत्र म्लेच्छान् पुलिन्दांश्च शूरसेनांस्तथैव च।

प्रस्थलान् भरतांश्चैव कुरूंश्च सह मद्रकैः।।

काम्बोज—यवनांश्चैव शकानां पत्तनानि च।

अवेक्ष्य दरदांश्चैव हिमवन्तं विचिन्वथ।। — ४/४३/११,१२

दक्षिणदिशि —

तथैवान्ध्रांश्च पुण्ड्रांश्च चोलान् पाण्ड्यांश्च केरलान्।

अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहाम्।। — ४/४१/११

## नगर निवेशः

महापुरी (राजधानी) —

अयोध्यानाम नगरी तत्रासील्लोक विश्रुता।

मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम्।।

आयता दश च द्वेच योजनानि महापुरी। — ११५/६,७

रम्यचत्वरसंस्थानां संविभक्त महापथाम्।

हर्म्यप्रासाद सम्पन्नां गणिकावर शोभिताम्।।

रथाश्वगजसम्बाधां तूर्यनाद निनादिताम्।

सर्वकल्याण सम्पूर्णां हृष्ट--पुष्ट जनाकुलाम्।।

आरामोद्यान सम्पन्नां समाजोत्सव शालिनीम्।

सुखिता विचरिष्यन्ति राजधानीं पितुर्मम।। — २/५१/२१–२३

पुरी –

अर्धचन्द्रप्रतीकाशा यमुनातीर शोभिता।

शोभितागृहमुख्यैश्च चत्वराऽपणवीथिकैः।।

चातुर्वर्ण्य–समायुक्ता नानावाणिज्य–शोभिता।

आरामैश्च विहारैश्च शोभमाना समन्ततः।। – ७/७०/११,१०–१२

सामान्यनगरम् –

निवेशयामास पुरं प्रतिष्ठानं यशस्करम्। – ७/९०/२२

कतिपयानिनगराणि नाम्ना निर्दिश्यन्ते –

गिरिव्रजं पुरवरं शीघ्रमासेदुरञ्जसा। – २/६८/२१

निकूलवृक्षमासाद्य दिव्यं सत्योपयाचनम्।

अभिगम्याऽभिवाद्यं तं कुलिङ्गां प्राविशन् पुरीम्।। – २/६८/१६

उपायाद् राघवस्तूर्णं प्राग्वटे विस्तृते पुरे। – २/७१/९

एकसाले स्थाणुमतीं विनते गोमतीं नदीम्।

कलिङ्गनगरे चापि प्राप्य सालवनं तदा।। – २/७१/१६

## नगर–परिवेशः

राजा तु बाह्लिमुत्सृज्य मध्यदेशे ह्यनुत्तमम्।

निवेशयामास पुरं प्रतिष्ठानं यशस्करम्।।–७/९०/२१–२२

(हतेषु तेषु सर्वेषु) भरतः केकयीसुतः।

निवेशयामास तदा समृद्धे द्वे पुरोत्तमे।।

तक्षं तक्षशिलायां तु पुष्कलं पुष्कलावते।

गन्धर्व देशे रुचिरे गान्धारविषये च सः।।

धनरत्नौघ संकीर्णे काननैरुपशोभिते।

अन्योन्यसंघर्षकृते स्पर्धया गुणविस्तरैः।।

उभे सुरुचिर प्रख्ये व्यवहारैरकिल्बिषैः।

उद्यान–यानसम्पूर्णे सुविभक्तान्तरापथे।।–७/१०१/१०–१३

अङ्गदीया पुरी रम्याऽप्यङ्गदस्य निवेशिता।

रमणीया सुगुप्ता च रामेणाक्लिष्ट कर्मणा।।

चन्द्रकेतोस्तु मल्लस्य मल्लभूम्यां निवेशिता।

चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा।।–२/१०२/८,९

पुरातननगर्या नवीकरणं यथा –

इयं मधुपुरी रम्या मधुरा देवनिर्मिता।

भविष्यति पुरी रम्या शूरसेना न संशयः।। – ७/७०/५–६

निवेशनं च शत्रुघ्नः श्रावणेन समारभत्।

स पुरा दिव्य संकाशो वर्षे द्वादशमे शुभे।

निविष्टः शूरसेनानां विषयश्चाकुतोभयः।।

यच्च तेन पुरा शुभ्रं लवणेन कृतं महत्।

तच्छोभयति शत्रुघ्नो नानावर्णोपशोभितम्।।–७/७०/८,९,१२

## गिरि–परिवेशः

ग्राम–नगर निवासतः परतोऽपि गिरिवनादौ वासप्रसङ्गे –

आवासस्तु गिरावस्मिन् शीघ्रमेव विधीयताम्। – ७/२८/२२

गिरिशृङ्गमिदं रम्यमुत्तमं पार्थिवात्मज।।

श्वेताभिः कृष्णताम्राभिः शिलाभिरुपशोभितम्। – ४/२७/७,८

पर्वतश्चित्रकूटोऽसौ बहुमूलफलोदकः। – २/९४/२६

नानामृगगणैर्द्वीपि तरक्ष्वृक्षगणैर्वृतः।

अदुष्टैर्भात्ययं शैलो बहुपक्षि समाकुलः।।

आम्रजम्बूवसनैर्लोध्रैः प्रियालैः पनसैर्धवैः। – २/९४/७,८

पुष्पवद्भिः फलोपेतैश्छायावद्भिर्मनोरमैः।

एवमादिभिराकीर्णः श्रियं पुष्यत्ययं गिरिः।।

जलप्रपातैरुद्भेदैर्निष्यन्दैश्च क्वचित् क्वचित्।

स्रवद्भिर्भात्ययं शैलः स्रवन्मद इव द्विपः।। – २/९४/१०,१३,१४

नानाविहगसंघुष्टं मयूरवरनादितम्। – ४/२७/८

तस्य सानुषु कूजन्ति नानाद्विजगणास्तथा। – ६/४/८६

तत्र गुहा निवेशः –

कन्दराणि च शैलांश्च निर्दराणि गुहास्तथा।

शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः।। – ४/१३/६

गुहासमीरणो गन्धान् नाना पुष्पभवान् बहून्।

घ्राणतर्पणमभ्येत्य कं नरं न प्रहर्षयेत्।।

यदीह शरदोऽनेकास्त्वया सार्धमनिन्दिते।

लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधर्षति।।–२/९४/१४–१५

तस्य शैलस्य शिखरे महतीमायतीं गुहाम्।

प्रत्यगृह्णीत वासार्थं रामः सौमित्रिणा सह।।

इयं गुरुंगुहा रम्या विशाला युक्तमारुता।

अस्यां वत्स्याम सौमित्रेवर्षरात्रमरिन्दम।। – ४/२७/४,६–७

राम ! तस्य तु शैलस्य महती शोभते गुहा।

शिलापिधाना काकुत्स्थ दुःखं चास्याः प्रवेशनम्।।

वनप्रदेशाः – तत्र वन्यवृक्ष–गज–मृगवानरादिनिषेविताः। यथा –

सालैस्तालैस्तमालैश्च खर्जूरैः पनसैर्द्रुमैः।

नीवारैस्तिनिशैश्चैव पुंनागैश्चोपशोभिताः।।

चूतैरशोकैस्तिलकैः केतकैरपि चम्पकैः।

स्यन्दनैश्चन्दनैर्नीपैः पर्णाशैर्लकुचैरपि।

धवाश्वकर्णखदिरैः शमीकिंशुकपाटलैः। – ३/१५/१६,१७–१८

तटाकवैरिणश्चापि शुक्लदन्तविभूषितान्।

घोरानेकचरान् वन्यान् द्विरदान् कुलघातिनः।।

मत्तान् गिरितटोत्कृष्टान् पर्वतानिव जङ्गमान्।

वानरान् द्विरद प्रख्यान् महीरेणु समुक्षितान्।।

वने वनचरांश्चान्यान् खेचरांश्च विहङ्गमान्। ४/१३/१०–१२

ऋक्षैस्तरक्षुभिः सिंहैः शार्दूलैश्च भयावहैः।

व्यालैश्च बहुभिर्भीमैः सेव्यमानाः समन्ततः।। – ६/६/८४

पश्य चन्दनवृक्षाणां पंक्तीः सुरुचिरा इव।

ककुभानां च दृश्यन्ते मनसैवोदिताः समम्।। – ४/२७/२४

स्थली –

मृदु शष्पाङ्कुराहारान् निर्भयान् वनगोचरान्।

चरतः सर्वतः पश्यन् स्थलीषु हरिणान् स्थितान्।। – ४/१३/९

नदीतट निवेशः –

पारिप्लवशतैर्जुष्टा बर्हिक्रौञ्च निनादिता।

रमणीया नदी सौम्य मुनिसङ्गनिषेविता।। – ४/२७/२३

कारण्डैः सारसैर्हंसैर्वञ्जुलैर्जलकुक्कुटैः।

चक्रवाकैस्तथा चान्यैः शकुनैः प्रतिनादितान्।–४/१३/८

वैदूर्यविमलैस्तोयैः पद्मैश्चाक्रोशकुड्मलैः।

शोभितान् सजलान् मार्गे तटाकीश्चावलोकयन्।।–४/१३/७

अशर्करामविभ्रंशां समतीर्थमशैवलाम्। – ३/७३/११

रामस्सञ्जातवालूकां कमलोत्पल शोभिताम्।

तत्र हंसाः प्लवाः क्रौञ्चाः कुरराश्चैव राघव।

वल्गुस्वरा निकूजन्ति पम्पासलिल गोचराः।

नोद्विजन्ते नरान् दृष्ट्वा वधस्याकोविदाः शुभाः।।– ३/७३/१२–१३

भूमिभागः –

सरांसि विमलाम्भांसि द्रुमाकीर्णांश्च पर्वतान्।

समान् भूमिप्रदेशांश्च वनानि फलवन्ति च।। – ६/४/५९–६०

मरुप्रदेशः –

यत्र वन्ध्यफला वृक्षा विपुष्पाः पर्णवर्जिताः।
निस्तोयाः सरितो यत्र मूलं यत्र सुदुर्लभम्।।
न सन्ति महिषा यत्र न मृगा न च हस्तिनः।

शार्दूलाः पक्षिणो वापि ये चान्ये वनगोचराः।।

न चात्र वृक्षा नौषध्यो न वल्ल्यो नापि वीरुधः।

निर्जलं निर्जनं शून्यं गहनं घोर दर्शनम्। – ४/४८/९,१०,११,६

द्वीपोपनिवेशः –

यत्नवन्तो यवद्वीपं सप्तराज्योपशोभितम्।

सुवर्णरूप्यकद्वीपं सुवर्णाकरमण्डितम्।। – ४/४०/३०

## जन–समाजस्वरूपम्

जनाः –

'यस्य दण्डश्च कोशश्च मित्राण्यात्मा पुरंजनः। पूर्णान्येतानि सर्वाणि स राज्य फलमश्नुते। (४/२२/९)' इति सप्तसु पूरणीयेषु षण्णां निरूपणं विध।य जनं (प्रजां) प्रस्तौति –

आसन् प्रजा धर्मपरा रामे शासति नानृताः।

सर्वेलक्षणसम्पन्नाः सर्वे धर्मपरायणाः।। – ६/१२८/१०५

अरोगवीर–पुरुषा शत्रुघ्नभुजपालिता। – ७/७०/१०

सुवाससः सुवेषाश्च ते च सर्वे शुचिव्रताः।। – १/७/७६

तथाहि जना विचाराचारकर्मभेदाद् विभिन्नवर्णजातिव्यवसाया इति विवेच्यन्ते –

ब्राह्मणाः क्षत्रियावैश्याः शूद्रा लोभविवर्जिताः।

स्वकर्मसु प्रवर्तन्ते तुष्टाः स्वैरेवकर्मभिः।। – ६/१२८/१०४

कर्मणा वर्णोत्कर्षोऽपि –

क्षत्रं ब्रह्ममुखं चासीद् वैश्याः क्षत्रमनुव्रताः। – १/६/१९

मानंव–समता, यथा –

अमरेन्द्र मया बुद्ध्या प्रजाः सृष्टास्तथा प्रभो।

एकवर्णाः समा भाषा एक रूपाश्च सर्वशः।।

तासां नास्ति विशेषोहि दर्शने लक्षणेऽपिवा।। – ७/३०/१९–२०

वर्णाश्रमिणां वर्णनं विधाय अपरजातीयान् निर्दिशति, तत्र विभिन्नमूलका दिव्यजातीयाः –

गन्धर्वाः किंनराः सिद्धा नागा विधाधरास्तथा। – ४/४३/४९

रमन्ते सततं तत्र नारीभिर्भास्वरप्रभाः।

सर्वेकामार्थ सहिता वसन्ति नर–योषितः।। ४/४३/.२०

रक्षाम इति यैरुक्तं राक्षसास्ते भवन्तु वः।

यक्षाम इति यैरुक्तं यक्षा एव भवन्तु वः।। – ७/४/१३

विजातीयाः सीमान्तवर्तिनः –

भूय एवाऽसृजद् घोरान् शकान् यवनमिश्रतान्। – १/५४/२०

तैरासीत् संवृता भूमिः शकैर्यवनमिश्रितैः। – १/५४/२१

तैस्ते यवन–काम्बोजा बर्वराश्चाकुलीकृताः। – १/५४/२३

तत्रम्लेच्छान् पुलिन्दांश्च शूरसेनांस्तथैव च।

प्रस्थलान् भरतांश्चैव कुरूंश्च सह मद्रकैः।।

काम्बोज यवनांश्चैव शकानां पत्तनानि च।

अन्वीक्ष्य दरदांश्चैव हिमवन्तं विचिन्वथ।। – ४/४३/११–१२

पह्लवान्नाशयामास शस्त्रैरुच्चावचैरपि। – १/५४/२०

वन्यजातीया: –

लब्धानुज्ञां सम्प्रहृष्टो ज्ञातिभि: परिवारित:।

आगम्य भरतं प्रह्वो गुहो वचनमब्रवीत्।। – २/८४/१५

अस्ति मूलफलं चैतन्निषादै: स्वयमर्जितम्।

आर्द्रं शुष्कं तथा मांसं वन्यं चोच्चावचं तथा।। – २/८४/१७

एतेषामाश्रया: सर्वे विचेया: काननौकस:।

गिरिभिर्येभिगम्यन्ते प्लवनेन प्लवेन च।। – ४/४०/२९

अन्तर्द्वीपवासिनो मांसाशिनोऽसभ्यजातीया: किरातादय: –

आममीनाशनाश्चापि किराता द्वीपवासिन:।

अन्तर्जलचरा घोरा नरव्याघ्रा इति स्मृता:।। – ४/४०/२८

कर्णप्रावरणाश्चैव तथा चाप्योष्ठकर्णका:।

घोरलोहमुखाश्चैव जवनाश्चैकपादका:।।

अक्षया बलवन्तश्च तथैव पुरुषादका:।

किरातास्तीक्ष्णचूडाश्च हेमाभा: प्रियदर्शना:।। – ४/४०/२६,२७

विभिन्न जातीय वर्गीयानां प्रकृति–प्रवृत्ती –

सुरैश्च परमोदारैर्दैतेयैश्च महाधनै:।

नाग–राक्षस–गन्धर्वैर्यक्षैश्च सुमहात्मभि:।। – ४/४०/७

तीक्ष्णकामास्तु गन्धर्वास्तीक्ष्णकोपाभुजङ्गमा:। – ४/५९/९

अपराधप्रकृतिकाश्चाण्डाला: –

न शक्या यज्ञमध्यस्था वेदि: स्रुग्भाण्डमण्डिता।

द्विजातिमन्त्रसम्पूता चाण्डालेनावमर्दितुम्।। – ३/५६/१८

व्यवसाय–प्रसङ्गः

जन–जनपदीय जीविकोपाय प्रकाराः –

कच्चित्ते दयिताः सर्वे कृषि गोरक्ष जीविनः।

वार्तायां संश्रितस्तात लोकोऽयं सुखमेधते।। – २/१००/४७

प्रधानत्वात् कृषिजीविनां शस्योत्पादनाय तदनुकूलक्षेत्रकं जनपदमभिकांक्षति –

सुकृष्ट सीमा पशुमान् हिंसाभिरभिवर्जितः।। –२/१००/४४

अदेवमातृकोरम्यः श्वापदैः परिवर्जितः।। – २/१००/४५

कश्चिज्जनपदः स्फीतः सुखं वसति राघव।। – २/१००/४६

तत्र सुकृष्टपच्यां भूमिं सङ्केतयति –

'सस्यमिवाम्बुभिः' – २/३२/१३

'खनित्र–लाङ्गलधराः' – १/४०/२७

तस्मिन् प्रशासति तदा सर्वकामदुघा मही। – ७/८३/४७

क्षेत्राणि सस्य युक्तानि कालेवर्षति वासवः। – ७/७०/१०

अकृष्टपच्यां भूमिं विवृणुते –

रसवन्ति प्रसूनानि मूलानि च फलानि च।

अकृष्टपच्यापृथिवी सुसम्पन्न महात्मनः।। – ७/८३/४२

कृषिजन्यानि शस्यानि –

शालि तण्डुल सम्पूर्णामिक्षुकाण्ड रसोदकाम्। १/५/१७

खर्जूर पुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलंः।

शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः। – ३/१६/१७

पक्वसस्या वसुमती सर्वौषधि समन्विता। – ७/प्र.१/८

शिल्प व्यवसायिनः –

मणिकाराश्च ये केचित् कुम्भकाराश्च शोभनाः।

सूत्रकर्मविशेषज्ञा ये च शास्त्रोपजीविनः।।

मायूरकाः क्राकचिका वेधका रोचकास्तथा।

दन्तकाराः सुधाकारा ये च गन्धोपजीविनः।।

सुवर्णकाराः प्रख्यातास्तथा कम्बलकारकाः।

स्नापकोष्णोदका वैद्या धूपकाः शौण्डिकास्तथा।।

रजकास्तुन्नवायाश्च ग्रामघोषमहत्तराः।

शैलूषाश्च सह स्त्रीभिर्यान्ति कैवर्तकास्तथा।। – २/८३/१२–१५

अथ भूमिप्रदेशज्ञा सूत्रकर्मविशारदाः –

स्वकर्माभिरताः शूराः खनकाः दन्तवाससः।।

कर्मान्तिकाः स्थपतयः पुरुषाः मन्त्रकोविदाः।

तथा वर्धकयश्चैव मार्गिणो वृक्षतक्षकाः।

सूपकाराः सुधाकाराः वंशचर्मकृतस्तथा। – २/८०/१,२,३

वाणिज्य–व्यापार वार्ताजीविनः –

वार्तायां संश्रितस्तात लोकोऽयं सुखमेधते।। – २/१००/४७

देशान्तरे व्यापारकर्माणो वणिजः –

चातुर्वर्ण्य–समायुक्ता नाना वाणिज्य शोभिता।। – ७/७०/११

(नाराजके जनपदे) वणिजो दूरगामिनः।

गच्छन्ति क्षेममध्वानं बहुपण्यसमञ्चिताः।। – २/६७/२२

नानादेशनिवासैश्च वणिग्भिरुपशोभिताम्। – १/५/१४

गन्धद्रव्यव्यवसायिनः –

दिव्यैराश्वसयामासुर्माल्यैर्गन्धैश्च गन्धिभिः। – ६/६०/३४

वस्त्रोद्योगः –

दिव्यानामम्बराणां च महार्हाणां च संचयान्।

कम्बलानां च चित्राणामाभिजानां च संचयान्।। – ४/५०/३६,३७

खनिजोद्योगः –

धातवो विविधाश्चापि मणिरत्नसुवर्णिनः।
तत्सारमखिलं नृणां धनं निचयवर्धनम्।। – ३/४३/३२–३३

वन–सम्पदा –

धनानि व्यवसायेन विचीयन्ते महावने। – ३/४३/३२

श्रमिकजनाः –

वाणिज्यव्यापारमूलम् उद्योगः, स च श्रमिकवर्गमाश्रित्य संवर्धते, तत्प्रवन्धनाय च पर्यवेक्षक उपयुज्यते, एवं यन्त्रादिपरिष्काराय यान्त्रिकवर्गस्य प्रयोजनीयता भवतीति संक्षेपतः संकेतयति –

ते स्ववारं समास्थाय वर्त्मकर्मणि कोविदाः।
करणैर्विविधोपेतैः पुरस्तात् संप्रतस्थिरे।। – २/८०/५
केचित्कुठारैष्टङ्कैश्च दात्रैश्छिन्दन् क्वचित् क्वचित्।
विधमन्ति च दुर्गाणि स्थलानि च ततस्ततः।।
निम्नभागस्तथैवाशु समांश्चक्रुः समन्ततः।
बबन्धुर्बन्धनीयांश्च क्षोद्यान् संचुक्षुदुस्तथा।।
बिभिदुर्भेदनीयांश्च तांस्तान् देशान्नरास्तदा।
चक्रुर्बहुविधाकारान् सागर प्रतिमान् बहून्।।
अचिरेण तु कालेन परिवाहान् बहूदकान्।
निर्जलेषु च देशेषु खानयामासुरुत्तमान्।। – २/८०/७–१२
इष्टकाश्च यथान्यायं कारिताश्च प्रमाणतः। – १/१४/२८

कार्यपर्यवेक्षकाः –

समर्था ये च द्रष्टारः पुरतश्च प्रतस्थिरे। – २/८०/३
आज्ञाप्याथ यथाज्ञप्ति युक्तास्तेऽधिकृता नराः। – २/८०/१५

यन्त्रचालने बाधादिनिरूपणम् --

नेदं निष्कारणं राजन् ! पुष्पकं यन्न गच्छति। -- ७/१६/६

परिवहनकार्यम् –

इष्टका बहुसाहस्त्री: शीघ्रमानीयतामिति। – १/१३/९

यात्रासाधनम् –

ते हयैर्गोरथै: शीघ्रं स्यन्दनैश्च मनोजवै:। – २/८२/२६

हयान् गजान् खरानुष्ट्रान् तथैव सुरभे: सुतान्।

अभोजयन् वाहनपास्तेषां भोज्यं यथाविधि।। – २/९१/५५

शिविका: –

शिविका विविधाकारा: . . . .।

चन्द्रार्कतरुणाभासां नियुक्तां शिविकां शुभाम्।

आस्थाय प्रययौ श्रीमान् भरत: सुपरिच्छद:।।

अथ यानप्रवेकैस्तु कौशल्याप्रमुखा: स्त्रिय:। – २/९२/३७–३६

पशु–पालनम् –

नीलवैदूर्यवर्णाश्च मृदून् यवससञ्चयान्।

निर्वापार्थं पशूनां ते ददृशुस्तत्र सर्वश:।।

इक्षुंश्चमधुलाजांश्च भोजयन्तिस्म वाहनान्। – २/९१/७९,५६

बलीवर्द रक्षणम् –

तावर्धदिवसं श्रान्तौ सूर्यरश्मि प्रतापितौ।

एतौ दृष्ट्वा कृशौ दीनौ कर्षकेण दुरात्मना।।

## गृहशिल्पकार्यम्

आसनम् –

ततो वैतसशाखाश्च जम्बुशाखाश्च वीर्यवान्।

चकार लक्ष्मणश्छित्त्वा सीतायाः सुखमासनम्।। – २/५५/१५

चर्मोद्योगः –

एतस्य मृगरत्नस्य परार्ध्ये काञ्चनत्वचि।
उपवेक्ष्यति वैदेही मया सह सुमध्यमा ।। – ३/४३/३५

वस्त्रादि –

न कादली न प्रियकी न प्रवेणी न चाविकी।
भवेदेतस्य सदृशी स्पर्शेऽनेनेति मे मतिः।। ३/४३/३६

पटगृहादि –

उपकार्या महार्हाश्च पार्थिवानां महौजसाम्।
सानुगानां नरश्रेष्ठो व्यादिदेश महाबलः।। – ७/७२/८

नौका निर्माणम् –

तौ काष्ठ संघाटनमथो चक्रतुः सुमहाप्लवम्।
शुष्कैर्वंशैः समाकीर्णमुशीरैश्च समावृतम्।। – २/५५/१४

इष्टका निर्माणम् –

इष्टकाश्च यथान्यायमकारिताश्च प्रमाणतः। – १/१४/२८

०००

# षष्ठं शासनानुशासन काण्डम्

शासनानुशासनसम्पर्कसूत्रम् –

शासनानुशासन–व्यवस्थापने दिग्–विदिग्वासिनां वैचारिकाणां निरन्तरं सम्पर्क स्थापनमावश्यकमिति ज्ञान–विज्ञान–विचाराचार–प्रचाराय संस्कृतिसभ्यता–परिष्काराय च विद्याव्रतस्नातानां प्रशस्तानां महर्षीणां कुलपतीनां च शासकीय सम्पर्क–प्रसङ्गमुपस्थापयते –

आजग्मुः मुनयः सर्वे राघवं प्रतिनन्दितुम्।।
कौशिकोऽथ यवक्रीतो गार्ग्यो गालव एव च।
कण्वो मेधातिथेः पुत्रः पूर्वस्यां दिशि ये स्थिताः।।
स्वस्त्यात्रेयश्च भगवान् नमुचिः प्रमुचिस्तथा।
अगस्त्योऽत्रिश्च भगवान् सुमुखो विमुखस्तथा।।
आजग्मुस्ते सहागस्त्या ये श्रिता दक्षिणां दिशम्।
नृषङ्गुः कवषो धौम्यः कौशेयश्च महानृषिः।।
तेऽप्याजग्मुः सशिष्या वै ये श्रिताः पश्चिमां दिशम्।
वसिष्ठः कश्यपोऽथात्रिर्विश्वामित्रः सगौतमः।।
जमदग्निर्भरद्वाजस्तेऽपि सप्तर्षयस्तथा।
उदीच्यां दिशि सप्तैते नित्यमेव निवासिनः।।
वेदवेदाङ्गविदुषो नानाशास्त्रविशारदाः। – ७/१/१–८

तपोवनादिधर्मस्थान–विद्यास्थानेषु सैन्यादिप्रवेशो निषिध्यते –

किमर्थं चापि निक्षिप्य दूरे बलमिहागतः।
कस्मान्नेहोपयातोऽसि सबलः पुरुषर्षभ।।
भरतः प्रत्यवाचेदं प्राञ्जलिस्तं तपोधनम्।

न सैन्येनोपयातोऽस्मि भगवन् भगवद्भयात्।।

राज्ञा हि भगवन्नित्यं राजपुत्रेण वा तथा।

यत्नतः परिहर्तव्या विषयेषु तपस्विनः।।

ते वृक्षानुदकं भूमिमाश्रमेषूटजां तथा।

न हिंस्युरिति तेनाहमेकएवागतस्ततः।। – २/९१/५,६,७,९

अनुमतैस्तैः प्रवेष्टव्यम् –

आनीयतामितः सेनेत्याज्ञप्तः परमर्षिणा।

तथाऽनुचक्रे भरतः सेनायाः समुपागमम्।। – २/९१/१०

स प्रविश्य महात्मानमृषिं शिष्यगणैर्वृतम्।

रामः सौमित्रिणा सार्धं सीतया चाभ्यनन्दयत्।। – २/५४/११–१२

शिक्षासंस्कार प्रवर्तनाय स्थापिता आश्रमाः –

आश्रमो नाति दूरस्थो महर्षेर्भावितात्मनः।।

प्राज्यधूमाकुलवनश्चीरमाला परिष्कृतः।

प्रशान्तमृगयूथश्च नानाशकुनिनादितः।। – ३/११/७८, ८०

नात्र जीवेन्मृषावादी क्रूरो वा यदि वा शठः।

नृशंसः पापवृत्तो वा मुनिरेष तथा विधः।।

अत्र देवाश्च यक्षाश्च नागाश्च पतगैः सह।

वर्सन्ति नियताहारा धर्ममाराधयिष्णवः।। – ३/११/९०–९१

शिक्षकाः –

ससूत्रवृत्त्यर्थपदं महार्थं ससंग्रहं सिद्ध्यति वै कपीन्द्रः।

न ह्यस्य कश्चित् सदृशोऽस्ति शास्त्रे वैशारदे छन्दगतौ तथैव।।

सर्वासु विद्यासु तपोविधाने प्रस्पर्धतेऽयं हि गुरुं सुराणाम्।।

–७/३६/४६,४७

यजुर्वेद विनीतश्च वेद विद्भिः सुपूजितः।

धनुर्वेदे च वेदं च वेदाङ्गेषु च निष्ठितः।। – ५/३५/१४

शिक्षादाने गुरु–शिष्य सन्तुष्टिः –

शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम्।

प्रतिजग्राह सन्तुष्टस्तस्य तुष्टोऽभवन् मुनिः।।

भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान् गुरोः। – १/२/१९,२१

आचार नियमाः –

जहौ निद्रां च तन्द्रां च प्रसक्तं च परिश्रमम्।

संग्रहेणाकरोत् सर्वान् मन्त्रान् सत्रावसानिकान्।। – २/५६/३,२९

शिक्षोपक्रमे ज्ञान–विज्ञानाद्यवगतिः –

तत्तत्स्थानान्वेषणपूर्वकं भूगोलज्ञानम्–

तस्य ते काननान्तांस्तु गिरीणां कन्दराणि च।

प्रभवाणि नदीनां च विचिन्वन्ति समाहिताः।। – ४/४८/१५–१६

तत्रदेशान् विचिन्वन्ति सशैलवनकाननान्।

विचिन्त्य तु दिशं पूर्वां यथोक्तां सचिवैः सह।

दिशमप्युत्तरां सर्वां विविच्य स महाकपिः।

सुषेणः पश्चिमामाशां विविच्य सह वानरैः। –४/४७/३,७,८,९

पुनरेवोद्यताः कृत्स्नां मार्गितुं दक्षिणां दिशम्। –४/४९/२१

खगोलज्ञानम् –

उशना च प्रसन्नार्चिरनुत्वां भार्गवोगतः।

ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः।।

आर्चेष्मन्तः प्रकाशन्ते ध्रुवं सर्वेप्रदक्षिणम्।।

त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः।

नैर्ऋते नैर्ऋतानां च नक्षत्रमतिपीड्यते।

मूले मूलवता स्पृष्टो धूप्यते धूमकेतुना।। – ६/४/४८,४९,५१

## शिष्टाचार प्रकरणम्

अभिवादन—प्रकारा: – तत्र प्रणाम विधि: –

'नाम संभावयन् रामो ववन्दे चरणौ पितु:। – २/३/३३

अभ्यवादयदव्यग्रा स्वं नाम समुदाहरत्। – २/११७/१९

प्रकारा: –

'प्राञ्जलि: प्रणतो भूत्वा'। – १/२/२४

'प्राञ्जलि:'। – २/३/३२

'जग्राहावनत: पादौ शिरसा पतितो भुवि।'

'शिरस्यञ्जलिमाधाय'। – ५/३६/३२

'प्रदक्षिणमुपावृत्य'।

'कृत्वा शिरसि चाञ्जलिम्।' – ५/६२/३८

'सुग्रीवस्याशु तौ मूर्ध्ना चरणौ प्रत्यपीडयत्।' – ५/६२/३८

अभिवाद्य तु धर्मात्मा तस्थौ राम: कृताञ्जलि:।' –३/१२/२५

आशीर्विधि: –

सपुत्रमूर्ध्न्युपाघ्राय राजा दशरथस्तदा। – १/२२/३

समात्रा समभिप्रेत्य परिष्वज्याभिनन्दितम्।

प्राप्नुह्यायुश्च कीर्तिं च धर्मं च स्वकुलोचितम्। – २/२०/२३

तां च मूर्ध्न्युपाघ्राय परिष्वज्य च कैकयी। – २/७२/४

वर्णानुरूपा आशिष: –

ब्राह्मणो वाऽपि भद्रं ते क्षत्रियो वाऽसि दुर्जय:।

वैश्यस्तृतीयो वर्णो वा शूद्रो वा सत्यवाग् भव।। – ७/७५/१८

वयस्यादि समान वर्गे –

'गृह्यतां पाणिना पाणिः।' – ४/५/११

तावन्यान्योऽञ्जलिं कृत्वा स्नेहात् संश्लिष्य चोरसा। – १/११/२२

आगमनानन्तरं हर्षाभिव्यक्तिः –

अद्यप्राप्ता तपः सिद्धिस्तव सन्दर्शनान् मया।

अद्य मे सफलं जन्म गुरवश्च सुपूजिताः।। – ३/७४/११

अद्य मे सफलं तप्तम् . . . । – ३/७४/१२

गमनोपक्रमे शुभाशंसनम् –

स्वस्ति प्राप्नुहि भद्रं ते गच्छ सौम्य यथासुखम्। – १/६५/२१

गच्छ सौम्य शिवं मार्गं कार्यस्यास्य विवर्धये। – ३/४०/२४

गम्यतामर्थ सिद्धये। – २/५०/५

स्वस्ति प्राप्नुहि भद्रं ते साधयाम नरर्षभ । – ७/७६/१६

कुशल जिज्ञासा यथा –

कच्चित्ते निर्जिता विघ्नाः कच्चित्ते वर्धते तपः।

कच्चित्ते नियतः कोप आहारश्च तपोधने।। – ३/७४/८

कच्चित्ते नियमाः प्राप्ताः कच्चित्ते मनसः सुखम्।

कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि।। – ३/७४/९

स्वागतपूर्वकं प्रयोजनं पृच्छेत् –

यथाऽमृतस्य सम्प्राप्तिर्यथा वर्षमनूदके।।

प्रणष्टस्य यथालाभो यथा हर्षो महोदयः।।

तथैवागमनं मन्ये स्वागतं ते महामुने।

क्व च ते परमं कामं करोमि किमु हर्षितः।। – १/१८/५०–५२

प्रस्थानकाले वाक्प्रयोग: –

श्रेयसे वृद्धये तात पुनरागमनाय च।

गच्छत्वरिष्टमव्यग्र: पन्थानमकुतो भयम्।। – २/३४/३१

अनुगमन नियम: –

यमिच्छेत् पुनरायान्तं नैव दूरमनुव्रजेत्। – २/४०/५०

ज्येष्ठ–कनिष्ठव्याहार व्यवहार: –

एष लोके सतां धर्मोयज्ज्येष्ठवशगो भवेत्। – २/४०/६

उत्तरं नहि वक्तव्यं ज्येष्ठेनाऽभिहिते पुन:।

प्रतिवक्तुं प्रकृष्टे हि नावकृष्टस्तु शक्नुयात्। – ४/१८/४६

प्रेष्ये मयि स्थिते राजन् न भूय: क्लेशमाप्नुयात्। – ७/६२/१५

तदा ज्ञापय क: किं ते कुतो वापि व्यवस्यतु। – ४/२९/२७

आसनग्रहणक्रम: –

ब्रह्मणा समनुज्ञात: सोप्युपाविशदासने। – १/२/२७

वाक्यान्तरे वक्तव्य निरोध:–

उत्तरं च न वक्तव्यं शूर वाक्यान्तरे मम। – ७/६२/२०

श्रेष्ठस्यादेशं पालनम् –

गुरुश्च राजा च पिता च वृद्ध: क्रोधात्प्रकर्षाद्यदि वापि कामात्।

यद् व्यादिशेत् कार्यमवेक्ष्य धर्मं कस्तं न कुर्यादनृशंसवृत्ति:।।
–२/२१/५८

समाजे ग्राह्य–त्याज्य विषया: –

न तत्समाचरेद् धीरो यत्परोऽस्य विगर्हयेत्। – ३/५०/८

परदाराभिमर्शनं त्याज्यम् –

निवर्तय गतिं नीचां परदाराभिमर्शनम्। – ३/५०/८

यथात्मनस्तथाऽन्येषां दारा रक्ष्या विमर्शनात्।। – ३/५०/९

राजद्रोहो विप्रतिषिद्धः –

राज्ञो विप्रतिकूलस्थो न जातु सुखमेधते।। – ३/४०/२६

आचार दोषाः

आचारदोषान् वैधर्म्येण, साधर्म्येण, परिणाम--प्रदायित्वेन क्वचित् शपथादि--क्रमेण भरतद्वारा 'यस्यार्योऽनुमते गतः' इति चतुर्थचरण योजनेन बोधयन्. विस्तृणाति –

प्रैष्यं पापीयसा यातु,

सूर्यं च प्रतिमेहतु।

हन्तु पादेन गाः सुप्ताः (यस्यार्योऽनुमतेगतः।) – २/७५/२२

कारयित्वा महत्कर्म भर्ता भृत्यमनर्थकम्।

अधर्मो योऽस्य सोऽस्यास्तु . . . ।। – २/७५/२३

परिपालयमानस्य राज्ञो भूतानि पुत्रवत्।

ततस्तु द्रुह्यतां पापम् . . . ।। – २/७५/२४

संश्रुत्य च तपस्विभ्यः सत्रे वै यज्ञदक्षिणाम्।

तां चापलपतां पापम् . . . ।। – २/७५/२६

पायसं कृसरं छागं वृथा सोऽश्नातु निर्घृणः।

गुरुंश्चाप्यवजानातु . . . ।। – २/७५/३०

गाश्च स्पृशतु पादेन गुरुन् परिवदेत च।

मित्रे द्रुह्येत सोऽत्यर्थम् . . . । – २/७५/३१

विश्वासात् कथितं किञ्चित् परिवादं मिथः क्वचित्।

विवृणोतु च दुष्टात्मा . . . . । – २/७५/३२

अकर्ता चाकृतज्ञश्च त्यक्तात्मा निरपत्रपः।

लोके भवतु विद्विष्टः . . . । २/७५/३३

पुत्रैर्दारैश्च भृत्यैश्च स्वगृहे परिवारिताः।

स एको मृष्टमश्नातु . . . । – २/७५/३४

मद्यप्रसक्तो भवतु स्त्रीष्वक्षेषु च नित्यशः।

कामक्रोधाभिभूतश्च . . . । – २/७५/४१

उभे सन्ध्ये शयानस्य यत्पापं परिकल्पते। – २/७५/४४

देवतानां पितृऋणां च माता–पित्रोस्तथैव च।

मास्म कार्षीत् स शुश्रूषाम् . . . । – २/७५/४६

आशामाशं समानानां दीनानामूर्ध्व चक्षुषाम्।

अर्थितां विपथी कुर्यात् . . . । – २/७५/५०

धर्मदारान् परित्यज्य परदारान् निषेवताम्।

त्यक्तधर्मरतिर्मूढो . . . । – २/७५/५५

ब्राह्मणायोद्यतां पूजां विहन्तु कलुषेन्द्रियः।

बालवत्सां च गां दोग्धुः . . . । – २/७५/५४

पारिवारिकी स्थितिः –

'यतो मूलं नरः पश्येत्' इत्युक्ते 'प्रत्यक्षे सति दैवते' इति सङ्केतिते पितुर्मातुश्च महत्त्वं परिवारे निरूपयति –

पिता –

न ह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम्।

यथा पितरि शुश्रूषा तस्य वा वचन क्रिया।। – २/१९/२२

पिता हि दैवतं तात देवतानामपिस्मृतम्।

तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः।। – २/३४/५२

माता –

अङ्गप्रत्यङ्गजः पुत्रो हृदयाच्चाभिजायते।

तस्मात् प्रियतरो मातुः (प्रिया एव तु बान्धवाः)।। – २/७४/१४

अपास्य मातृ शुश्रूषामनर्थे सोऽवतिष्ठताम्। – २/७५/४८

माता–पितरौ –

यन्मातापितरौ वृत्तं तनये कुरुतः सदा।
स सुप्रतिकरं तत्तु मात्रा पित्रा च यत्कृतम्।।
यथाशक्ति प्रदानेन स्वापनोच्छादनेन च।
नित्यं च प्रियवादेन तथा संवर्धनेन च।। – २/१११/९,१०

यावत् पितरि धर्मज्ञ गौरवं लोकसत्कृते।
तावत् धर्मकृतां श्रेष्ठ जनन्यामपि गौरवम्।। – २/१०१/२१

देवगन्धर्व गोलोकान् ब्रह्मलोकांस्तथा परान्।
प्राप्नुवन्ति महात्मानो मातृपितृ परायणाः।। – २/३०/३७

मातृकल्पा विमातरः –

यां वृत्तिं वर्तते रामः कौशल्यायां महाबलः।
तामेव नृपनारीणामन्यासामपि वर्तते।। – २/११८/५

पितृकल्पाः –

ज्येष्ठो भ्राता पिता वाऽपि यश्च विद्याः प्रयच्छति।
त्रयस्ते पितरो ज्ञेया धर्मे च पथिवर्तिनः।। – ४/१८/१३

पुत्रः –

पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः।
तस्मात् पुत्र इति प्रोक्तः पितॄन् यः पाति सर्वतः।। – २/१०७/१२

पितुर्हि वचनं कुर्वन् न कश्चिन्नावहीयते। – २/२१/३७

पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः। – २/२१/४९

पुत्र–पुत्री प्रकृतिः –

पितॄन् समनुजायन्ते नरा मातरमङ्गनाः। – २/३५/२८

पुत्रकल्पा: —

यवीयानात्मन: पुत्र: शिष्यश्चापि गुणोदित:।

पुत्रवत्ते त्रयश्चिन्त्या धर्मश्चैवात्र कारणम्।। — ४/१८/१४

पुत्री–जामातरौ —

अन्त:पुरं प्रवेश्यास्मै कन्यां दत्त्वा यथाविधि।

शान्तां शान्तेन मनसा राजा हर्षमवाप स:।। — १/१०/३२

भ्रातर: —

ज्येष्ठो मान्य: पितृसम: . . . । — ६/१६/१९

भ्रातरं दयितो भ्रातु: सौभ्रात्रमनुदर्शयन्। — १/१/२६

देशे देशे कलत्राणि देशे देशे च बान्धवा:।

तं तु देशं न पश्यामि यत्र भ्राता सहोदर:।। — ६/१०१/१५

यद् विना भरतं त्वां च शत्रुघ्नं वापि मानद।

भवेन्मम सुखं किञ्चिद् भस्म तत्कुरुतां शिखी।। — २/९७/८

भ्राता विषमशीलो हि कथं भ्रात्रा निरस्यते।। — ६/८७/२०

ईदृशं व्यसनं प्राप्तं भ्रातरं य: परित्यजेत्।

को नाम स भवेत्तस्य थमेष न परित्यजेत्।। — ६/१८/५

बन्धुप्रीति: —

गोप्ता हि रामं सौमित्रिर्लक्ष्मणे चापि राघव:।

अश्विनोरिव सौभ्रात्रं तयोर्लोके तु विश्रुतम्।। — २/७/३१

ज्येष्ठ–कनिष्ठ समुदाचार: —

तस्मिन् समाविशद् राम: स्वास्तरे सह सीतया।

प्रक्षाल्य च तयो: पादौ व्यपाक्रामत् सलक्ष्मण:।। — २/८७/२१

कौटुम्बिकता –

सख्यं सम्बन्धकं चैव तदा तं प्रत्यपूजयत्।

एवं सुसत्कृतस्तेन सहोषित्वा नरर्षभः।।

सप्ताष्ट दिवसान् राजा राजानमिदमब्रवीत्।

शान्ता तव सुता राजन् सह भर्त्रा विशांपते।।

मदीयं नगरं यातु कार्यं हि महदुद्यतम्। – १/११/१८,१९,२०

सम्बन्धिने उपहारादि –

कौशेयानि च वस्त्राणि भूषणानि वराणि च।

क्षिप्रमादाय राज्ञश्च भरतस्य च गच्छत।। – २/६८/९

इमानि च महार्हाणि वस्त्राण्याभरणानि च।

प्रतिगृह्य विशालाक्ष मातुलस्य च दापय।। – २/७०/४

प्रीतिदानम् –

सा वस्त्रमङ्गरागं च भूषणानि स्रजस्तथा।

मैथिली प्रतिजग्राह प्रीतिदानमनुत्तमम्।। – २/११८/२१

बान्धवत्वम् –

धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण।

इच्छामि भवतामर्थे एतत्प्रतिशृणोमि ते।। – २/९७/५

यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत्।

नाहं तत्प्रतिगृह्णीयां भक्ष्यान् विषकृतानिव।। – २/९७/४

स्वजन–परिजनेषु तारतम्यम् –

गुणवान् यः परजनः स्वजनो निर्गुणोऽपि वा।

निर्गुणः स्वजनः श्रेयान् यः परः पर एव सः।। – ६/८७/१५

परिवारे गणनीयाः तैः समं समानाहारविहारो भवेत् –

पुत्रैर्दासैश्च भृत्यैश्च स्वगृहे परिवारितः।

य एको मृष्टमश्नाति (यस्यार्योऽनुमते गतः)।। – २/७५/३४

परिवारे- हिंसनं सर्वथा गर्ह्यम् –

कथं नु पुत्राः पितरं हन्युः कस्याञ्चिदापदि।

भ्राता वा भ्रातरं हन्यात् सौमित्रे प्राणमात्मनः।। – २/९७/१६

सहजः परिवार व्यवहारः, यथा– ज्येष्ठे कनिष्ठे मध्यमे च –

प्रायेण हि नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः।

मातृऋणां च कनीयांसस्तस्माद् रक्ष्ये कनीयसम्।। – १/६१/१९

पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम्।

विक्रेयं मध्यमं मन्ये राजपुत्र नयस्व माम्। – १/६२/२१

ज्ञातयः –

नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः।

घोराः स्वार्थ प्रयुक्तास्तु ज्ञातयो नो भयावहाः।।

कृत्स्नाद् भयाज् ज्ञातिभयं कुकष्टं विहितं च नः।

विद्यते ज्ञानितो भयम् . . . । – ६/१६/७,८–९

## सामाजिकी

कुल–शीलम् –

लोकजीवने कुलशीलविचारो महत्त्वमादधातीत्याह –

यतो मूलं नरः पश्येत् प्रादुर्भावमिहात्मनः।

कथं तस्मिन्न वर्तेत (प्रत्यक्षे सति दैवते)।। – २/१/१६

इदं हि वृत्तमुचितं कुलस्यास्य सनातनम्।

दानं दीक्षा च यज्ञेषु तनुत्यागोमृधेषु हि।। --२/४०/७

कुलवृत्तिः –

यां वृत्तिं वर्तते तातः यां च नः प्रपितामहः।

तां वृत्तिं वर्तसे कच्चिद् या च सत्पथगा शुभा।। – २/१००/७४

कुलप्रतिष्ठा –

त्वय्येतद् पुरुषव्याघ्र युक्तं राघववंशजे।

गुरुवृत्तिर्दमश्चैव साधूनां चानुयायिता।। – २/९०/२०

एवं हि कौलिके धर्मेशीले च व्यतिक्रमो नार्हति –

एवं पूर्वैर्गतो मार्गः पैतृपैतामहैर्ध्रुवः।

तमापन्नः कथं शोचेद् यस्य नास्ति व्यतिक्रमः।। – २/१०५/३०

कुलपतनम् –

क्रुद्धो नृशंसः परुषः अविद्वांश्चाप्यधार्मिकः।

कुलानि पातयत्येव सप्त सप्त च राघव।। – ७/५९/प्रक्षि०२/४६

ब्रह्मस्वं देवताद्रव्यं स्त्रीणां बालधनं च यत्।

दत्तं हरति यो भूय इष्टैः सह विनश्यति।

– ७/५९/प्रशि०२/४८–४९

मनसाऽपि हि देवस्वं ब्रह्मस्वं च हरेत्तु यः।

निरयान्निरयं चैव पतत्येव नराधमः।। – ७/५९/प्रक्षि०२/५०–५१

कुलोत्थानम् –

अनृणः स महाबाहुः पिता दशरथस्तव।

यस्य त्वमीदृशः पुत्रो धर्मात्मा धर्मवत्सलः।। – २/११३/१७

## पुरुषधर्मः

कच्चित्ते सफला वेदाः कच्चित्ते सफलाः क्रियाः।

कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम्।। – २/१००/७२

यत्तु कार्यं मनुष्येण शौटीर्यमवलम्ब्यताम्। – ६/२/१४

पुरुषभेदा: –

त्रिविधा: पुरुषा लोके उत्तमाधममध्यमा:।
तेषां तु समवेतानां गुणदोषौ वदाम्यहम्।। – ६/६/६

ऋणानि त्रीण्यपाकृत्य दुर्हृद: साधुनिर्दहन्।
सुहृदस्तर्पयन् कामैस्त्वमेवात्रानुशाधि माम्।। – २/१०६/२८

विक्रान्ता बलवन्तोवा ये भवन्ति नरर्षभा:।
कथयन्ति न ते किञ्चित् तेजसा चातिगर्विता:।। – ३/२९/१७

शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम्।
सत्येन परिगृह्णाति स वीर: पुरुषोत्तम:।। – ४/३०/७२

अर्थिनामुपपन्नानां पूर्व चाप्युपकारिणाम्।
आशां संश्रुत्य यो हन्ति स लोके पुरुषाधम:।। – ४/३०/७१

पत्नीं प्रतिकर्तव्यता –

आत्मा हि दारा: सर्वेषां दारसंग्रहवर्तिनाम्। – २/३७/२४

धर्मदारान् परित्यज्य परदारान् निषेवताम्।
त्यक्त धर्मरतिर्मूढो (यस्याऽऽर्योऽनुमते गत:।। – २/७५/५५

मायया रमतां नित्यं पुरुष: पिशुनोऽशुचि:।।
ऋतुस्नातां सतीं भार्यामृतुकालानुरोधिनीम्।
अतिवर्तेत दुष्टात्मा (यस्याऽऽर्योऽनुमते गत:)।। –२/७५/५१–५२

एकपत्नीत्वम् –

न सीताया: परां भार्या बव्रे स रघुनन्दन:। – ७/९९/८

## वय: क्रम कर्माणि

बाल्ये –

तेषां जन्म क्रियादीनि सर्वकर्माण्यकारयत्। – १/१८/२४

सन्ततिर्हि तवाख्याति भविष्यञ्छुभभाग्यताम्। – ५/६४/१८

यौवने –

सर्वे वेदविदः शूराः सर्वे लोकहितेरताः।

सर्वे ज्ञानोपसम्पन्नाः सर्वे समुदिता गुणैः।

ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः। – १/१८/२५–२६,३५

बृद्धत्वम् (त्रिविधम्) –

ते द्विजास्त्रिविधं वृद्धा ज्ञानेन वयसौजसा।। – २/४५/१३

बार्धक्यम् –

गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरूहाः।

जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत्।। – २/१०५/२३

नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमितेऽहनि।

आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम्।। – २/१०५/२४

## ऋणत्रयम्

ऋणानि त्रीण्यपाकुर्वन (२/१०६/२८) इति स्मृतेः कानि तानि, कथं च तानि शोधनीयानीति प्रदर्शयति –

ततः स्नात्वा यथान्यायं सन्तर्प्य पितृ–देवताः। – १/३५/९

पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम्। – १/४४/१५

हत्वा चैवाग्निहोत्राणि प्राश्य चामृतवद्धविः।। – १/३५/१०

इति पितृ–देवर्षित्रयस्य तर्पणपूजनस्वाध्यायैः समर्चयद्भिः पुम्भिः पुनः वैदिक–पौराणिक विधिपूर्वकं कृत्यं सम्पादयद्भिर्भवितव्यमित्युदाहरति –

ओङ्कारोऽथ वषट्कारो वेदाश्च वरयन्तु माम्।

क्षत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि।। – १/६५/२३

वैदिकविधिः –

तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा। – १/८/९

ऋत्विग्भिरुपसन्दिष्टो यथावत् क्रतुराप्यताम्। – १/८/२२

पौराणिक विधिः –

देवकार्यनिमित्तं च तत्राऽपश्यत् समुद्यतम्।

दध्यक्षतघृतं चैव मोदकान् हविषस्तथा।। – २/२०/१७

## सामाजिकम्–(विवाह प्रकरणम्)

कन्यापितृत्वं दुःखं हि सर्वेषां मानकांक्षिणाम्। – ७/१२/११

सदृशाच्चापकृष्टाच्च लोके कन्यापिता जनात्।

प्रधर्षणमवाप्नोति शक्रेणापि समो भुवि।। – २/११८/३५

कन्यादाने पितुरधिकारिता –

मा मां स्पृश बलाद् राजन् ! कन्या पितृवशा ह्यहम्।

दास्यते चाऽनवद्याङ्ग ! तव मां याचितः पिता। – ७/८०/९–१२

कन्यासु कुलप्रतिष्ठा –

मातुः कुलं पितृकुलं यत्र चैव च दीयते।

कुलत्रयं सदा कन्या संशये स्थाप्य तिष्ठिति।। – ७/९/१०

वयः प्राप्तायाः कन्यायाः कृते–

पतिसंयोग सुलभं वयो दृष्ट्वातु मे पिता।

चिन्तामभ्यगमद् दीनो वित्तनाशादिवाऽधनः।। – २/११८/३४

स्वयंवर विधानम् –

स्वयंवरं तनूजायाः करिष्यामीति धर्मतः। – २/११८/३८

वरस्य विवाहेऽपि पितुरादेशः सर्वथाऽपेक्ष्यते –

दीयमानां न तु तदा प्रतिजग्राह राघवः।

अविज्ञाय पितुश्छन्दमयोध्याधिपतेः प्रभोः।।

ततः श्वशुरमामन्त्र्य वृद्धं दशरथं नृपम्।।

मम पित्रा त्वहं दत्ता रामाय विदितात्मने।। – २/११८/५१,५२

वरकन्ययोरायुमेलापनम् वैवाहिक वयो निर्धारणं च –

मम भर्ता महातेजा वयसा पञ्चविंशकः।।

अष्टादशहि वर्षाणि ममजन्मनि गण्यते।। – ३/४७/१०–११

विवाहे कौलिकता –

अचिन्त्यान्य प्रमेयाणि कुलानि नरपुङ्गव।

इक्ष्वाकूणां विदेहानां नैषां तुल्यस्तु कश्चन।। – १/७२/२

जनकानां कुले कीर्तिमाहरिष्यति मे सुता।

सीतां भर्तारमासाद्य रामं दशरथात्मजम्।। – १/६७/२२

विवाहक्रमे कुलवर्णनप्रथा, यथा– वरकुल वर्णनम्–

प्रदानेहि मुनिश्रेष्ठ कुले निरवशेषतः।

वक्तव्यं कुलजातेन तान्निबोध महामते। – १/७२/२

मनुः प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः।

तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम्।। – १/७०/२१

सागरस्यासमञ्जस्तु असमञ्जादथांशुमान्।

दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः

भगीरथात्ककुत्स्थश्च ककुत्स्थाच्च रघुस्तथा।

रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादधः।। १/७०/३८, ३९

नाभागस्य बभूवाज अजाद्दशरथोऽभवत्।

अस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ।। – १/७०/४३

कन्याकुलवर्णनम् –

राजाऽभूतत् त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा।

निमिः परमधर्मात्मा सर्वसत्त्ववतां वरः।।

तस्य पुत्रो मिथिर्नाम जनको मिथिपुत्रकः।

प्रथमो जनको राजा जनकादप्युदावसुः।। — १,७/३,४

कीर्तिरातस्य राजर्षेर्महारोमा व्यजायत।

स्वर्णरोम्णस्तु राजर्षेर्ह्रस्वरोमा व्यजायत।। — १/७१/११—१२

तस्य पुत्र द्वयं राज्ञो धर्मज्ञस्य महात्मनः।

ज्येष्ठोऽहमनुजो भ्राता मम वीरः कुशध्वजः।। — १/७१/१३

त्रिवारं सिद्धान्तवाक्यं वाच्यम् —

वीर्यशुक्लां मम सुतां सीतां सुरसुतोपमाम्।

द्वितीयामुर्मिलां चैव त्रिर्वदामि न संशयः।। — १/७१/२१—२२

विवाहे मुहूर्तविचारः —

उत्तरे दिवसे ब्रह्मन् फल्गुनीभ्यां मनीषिणः। — १/७२/१३

फल्गुन्यामुत्तरे राजन् तस्मिन् वैवाहिकं कुरु।। — १/७१/२४

तत्र पूर्वकृत्यम् —

रामलक्ष्मणयो राजन् गोदानं कारयस्व ह।

पितृकार्यं च भद्रं ते ततो वैवाहिकं कुरु।। — १/७१/२३

पति—पत्न्योः समानरूपशीलता —

रामस्य तु विशालाक्षी पूर्णेन्दु सदृशानना।

धर्मपत्नी प्रिया नित्यं भर्तुः प्रियहिते रताः।।

सा सुकेशी सुनासोरूः सुरूपाच यशस्विनी।

तप्तकाञ्चनवर्णाभा रक्ततुङ्गनखी शुभा।

सीतानाम वरारोहा वैदेही तनुमध्यमा।। — ३/३४/१५—१६,१७

नर—नार्यो रूप—प्रवृत्तिवैषम्यं वर्ज्यं भवतीत्याह —

सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी।।

विशालाक्षं विरूपाक्षी सुकेशी ताम्रमूर्धजा।

प्रियरूपं विरूपा सा सुस्वरं भैरवस्वना।।

तरुणं दारुणा वृद्धा प्रियमप्रियदर्शना।

न्यायवृत्तं सुदुर्वृत्ता दक्षिणं वामभाषिणी।। – ३/१७/९–१०,११

## अन्त्येष्टि प्रक्रिया

मृतेशोकपरिहारपूर्वकमुत्तर कार्यम् –

न शोकः परितापेन श्रेयसा युज्येत मृतः।

यदत्रानन्तरं कार्यं तत्समाधातुमर्हथ।। – ४/२५/२

मरणोत्तरं लौकिक–पारलौकिक विधिः –

ऐहिलौकिक पारक्यं कर्म पुम्भिर्निषेव्यते। – ६/६४/९

प्रेतकार्याणि –

प्रेतकार्याणि यान्यस्य कर्तव्यानि विशांपतेः।

तान्यव्यग्रं महाबाहो क्रियतामविचारितम्।। – २/७६/११

जनसमाजे प्रचलिता अन्त्येष्टि प्रकारातुलनीयम्–हिन्दुजातौ दाहः, खृष्टीयमोहम्मदीयादौ मृत्तिका निक्षेपः, पारसीक समाजे प्रक्षेपः, संन्यासिनां यतीनां च जलप्रवाहः, तद्यथा– दाहादि स्वजनस्य कृते –

स ददौ पावकं तस्य विधियुक्तं विभीषणः।

स्नात्वा चैवार्द्रवस्त्रेण तिलान् दर्भ विमिश्रितान्।।

उदकेन च सम्मिश्रान् प्रदाय विधिपूर्वकम्। – ६/१११/१२०–१२१

अन्यस्य कृते –

सौमित्रे हर काष्ठानि निर्मथिष्यामि पावकम्।

गृध्रराजं दिधक्षामि मत्कृते निधनं गतम्।। – ३/६८/२७

मृत्तिकानिक्षेपः –

अवटे चापि मां राम निक्षिप्य कुशली व्रज।

रक्षसां गतसत्त्वानामेष धर्मः सनातनः।। – ३/४/२२

जलप्रवाहः –

प्राप्य तत्तोय विक्लेदं देवलोकमुपागमन्। – ७/११०/२६

बहिः प्रक्षेपः –

शरीरं भक्षयिष्यन्ति वायसाः श्वापदानि च। – ५/१३/४२

निक्षेपात् पूर्व शवपरिष्कारः –

लिलिपुश्च परार्ध्येन चन्दनेन परन्तपम्।

दिव्यैराश्वासयामासुर्माल्यैर्गन्धैश्च गन्धिभिः।।

धूपगन्धांश्च ससृजुस्तुष्टुवुश्च परन्तपम्।। – ६/६०/३४–३५

अस्थि संचयादि –

सावशेषास्थिनिचये किमिदं त्वं विलम्बसे।

दृष्ट्वा भस्मारुणं तच्च दग्धास्थिस्थानमण्डलम्।

पितुः शरीर निर्वाणं निष्टनन् विषसाद ह।। – २/७७/२२–८

श्राद्धादि –

ततो दशाहेऽतिगते कृतशौचो नृपात्मजः।

द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत्।।

ततः प्रभातसमये दिवसे च त्रयोदशे। – २/७७/१,४

अश्रूणि परिमृद्नन्तौ रक्ताक्षौ दीनभाषिणौ।

अमात्यास्त्वरयन्तिस्म तनयौ चापराः क्रियाः।। – २/७७/२६

श्राद्धादौ भोजनम् –

भोजनानि किल श्राद्धे केचित् स्वानेव बान्धवान्।

ततः पश्चात् समीक्षन्ते कृतकार्या द्विजोत्तमान्।।

यत्र ये गुणवन्तश्च विद्वांसश्च द्विजातयः।

न पश्चात्तेऽभिमन्यन्ते सुधामपि सुरोपमाः।। – २/६१/१२,१३

यज्ञादि महोत्सवे भोज्य विधानम् –

अन्नकूटाश्च दृश्यन्ते बहवः पर्वतोपमाः।

दिवसे दिवसे तत्र सिद्धस्य विधिवत्तदा।।

अन्नपानैः सुविहितास्तस्मिन् यज्ञे महात्मनः।।

अन्नं हि विधिवत् स्वादु प्रशंसन्ति द्विजर्षभाः।

अहो तृप्ताः स्म भद्रं ते इति शुश्राव राघवः।।– १/१४/१५,१६,१७

## समाजे धर्मस्थानम्

यजस्व, देहि, दीक्षस्व, तपस्तप्यस्व, सन्त्यज। – २/१०८/१६

इत्येवं यजनं, दानं, दीक्षा, तपः त्याग–इत्येतानि धर्म्यकर्माणि निर्दिशन् तदर्थ द्विजातिचरितानुचरणं निबोधयति–

द्विजातिचरितो धर्मः शास्त्रे दृष्टः सनातनः। – २/६१/२३

उपाध्यायः –

स कच्चिद् ब्राह्मणो विद्वान् धर्मनित्यो महाद्युतिः।

इक्ष्वाकूणामुपाध्यायो यथावत्तात पूज्यते।। – २/१००/९

पुरोहितः –

कच्चिद् विनयसम्पन्नः कुलपुत्रो बहुश्रुतः।

अनसूयुरनुद्रष्टा सत्कृतस्ते पुरोहितः।। – २/१००/११

ऋत्विक् –

कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः।

हुतं च होष्यमाणं च काले वेदयते सदा।। – २/१००/१२

अन्ये च मान्याः –

कच्चिद्देवान् पितृन् भृत्यान् गुरुन् पितृसमानपि।

वृद्धांश्च तात वैद्यांश्च ब्राह्मणांश्चाभिमन्यसे।। – २/१००/१३

दिवसे दिवसे तत्र संस्तरे कुशला द्विजाः।
सर्वकर्माणि चक्रुस्ते यथाशास्त्रं प्रचोदिताः।। – १/१४/२०

देवस्थानानि –

स तत्र ब्रह्मणः स्थानमग्नेः स्थानं तथैव च।।
विष्णोः स्थानं महेन्द्रस्य स्थानं चैव विवस्वतः।
सोमस्थानं भगस्थानं स्थानं कौबेरमेव च।।
धातुर्विधातुः स्थानं च वायोः स्थानं तथैव च।
स्थानं च पाशहस्तस्य वरुणस्य महात्मनः।।
स्थानं तथैव गायत्र्या वसूनां स्थानमेव च।
स्थानं च नागराजस्य गरुडस्थानमेव च।।
कार्तिकेयस्य च स्थानं धर्मस्थानं च पश्यति।। – ३/१२/१७–२१

देवस्थानस्य परिमार्जनादीन्यपेक्षितानां व्यधिकरणेन प्रदर्शयति –

अपेतमाल्यशोभानि असम्भृष्टाजिराणि च।
देवागाराणि शून्यानि न भान्तीह यथा पुरा।।
देवतार्चाः प्रबिद्धाश्च यज्ञगोष्ठास्तथैव च।
देवायतनचैत्येषु दीनाः पक्षिमृगास्तथा।।–२/७१/३९–४०,४२

## कर्मकाण्डीयम्

बहुविस्तरा यज्ञ प्रकाराः –

यज्ञास्ते सप्त पुत्रेण प्राप्तास्ते बहुविस्तराः।।
अग्निष्टोमोऽश्वमेधश्च यज्ञो बहु सुवर्णकः।
राजसूयस्तथा यज्ञो गोमेधो वैष्णवस्तथा।।
माहेश्वरे प्रवृत्ते तु यज्ञे पुंभिः सुदुर्लभे।
वंशस्ते लब्धवान् पुत्रं साक्षात्पशुपतेरिह।। – ७/२५/७–८,९

यज्ञसाधनानि –

हविराज्यं पुरोडाशः कुशा यूपाश्च खादिराः।

नैतानि यातयामानि कुर्वन्ति पुनरध्वरे।। – २/६१/१७

दीक्षाविधिः –

स्थितस्तु प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा।

ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम्।। – १/२७/२२

दानादि –

ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम्।
देहि चाशंसमानस्य सन्तरस्व च मा चिरम्।। – २/३०/४३

अवज्ञया न दातव्यं कस्यचिल्लीलयाऽपि वा।।

अवज्ञया कृतं हन्याद् दातारं नात्र संशयः। – १/१३/३३–३४

दत्तं न तेऽस्ति सूक्ष्मोऽपि तप एव निषेवसे।

तेन स्वर्गगतो वत्स बाध्यसे क्षुत्–पिपासया।। – ७/७८/१६

दत्तस्य हि पुनर्दाने सुमहत्पुण्यमुच्यते।। – ७–७६/३१

उपवासादि व्रतनियमनिर्वहणम् –

औपवास्यं तदाकार्षीद् राघवः सह सीतया।

लक्ष्मणेन यथा नीतं पीतं वारि ६३२'१महात्मना।।

ततस्तु जलशेषेण लक्ष्मणोऽप्यकरोत्तदा। – २/८७/१८–१९

अद्यप्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा।

फलमूलाशनो नित्यं जटाचीराणि धारयन्।। – २/८८/२६

तपस्वी नियताहारः शेते शीते महीतले। – ३/१६/२८

तपः प्रयोजनीयता –

अध्रुवे हि शरीरे यो न करोति तपोऽर्जनम्।

स पश्चात्तप्यते मूढो मृतो गत्वाऽऽत्मनो गतिम्।। – ७/१५/२२

तत्प्रकाराश्च –

ततापं ग्रीष्मकाले तु पञ्चाग्नीन् परितः स्थितः।।

मेघाम्बुसिक्तो वर्षासु वीरासनमसेवत।

नित्यं च शिशिरे काले जलमध्यप्रतिश्रयः।। – ७/१०/३–४

धर्मे पञ्चतपा भूत्वा वर्षास्वाकाश संश्रयः।।

शिशिरे सलिलेशायी रात्र्यहानि तपोधनः। – १/६३/२३–२४

तपः स्थलम् –

पश्चिमायां विशालायां पुष्करेषु महात्मनः।

सुखं तपश्चरिष्यामः सुखं तद्धि तपोवनम्।। –१/६१/३

उत्तरं पर्वतं राम विश्वामित्रो जगाम ह।

कौशिकी तीरमासाद्य तपस्तेपे दुरासदम्। – १/६३/१४–१५

## कर्मकाण्ड प्रक्रिया

नित्यम् –

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः।

कौशल्या सुप्रजा रामः पूर्वासन्ध्या प्रवर्तते।

उत्तिष्ठ नरशार्दूल कर्त्तव्यं दैवमाह्निकम्।।

स्नाताश्च कृतजप्याश्च हुतहव्या नरोत्तम। – १/२२/१,२,१८

तत्र देवान् पितृन् विप्रानर्चयित्वा यथाविधि। – ७/३७/१४

अन्वास्य पश्चिमां सन्ध्यां तत्र वासमकल्पयत्। – ३/७/२३

नैमित्तिकम् –

नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः।

कृताग्रयणिकाः काले सन्तो विगतकल्मषाः।। – ३/१६/६

काम्यम् –

सुतार्थं हयमेधेन किमर्थं न यजाम्यहम्। – १/८/२

प्रायश्चित्तिकम् –

तत् स्मर त्वं महाबाहो दुष्कृतं यत् त्वया कृतम्। – ७/३०/४६

भवन्तः श्रुतकर्माणो लोकचारित्रवेदिनः।

समादिशन्तु नियमं प्रायश्चित्तं यथा भवेत्।। – १/९/१०–११

निष्ठा –

परमापद्गतस्यापि धर्मे मम मतिर्भवेत्।
या या मे जायते बुद्धिर्येषु येष्वाश्रमेषु च।
सा सा भवतु धर्मिष्ठा तं तं धर्मं च पालये।

– ७/१०/३०–३१–३२

तीर्थस्थलम् –

प्रयागादीनि तीर्थानि गङ्गाद्याः सरितस्तथा।
नैमिषादीन्यरण्यानि कुरु क्षेत्रादिकान्यपि।। – ७/१११/१३
सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन् यथाविधि। – १/२/२०
कृताभिषेको गङ्गायां बभूव गतकल्मषः। – १/४३/३०
मध्यं तु समनुप्राप्य भागीरथ्यास्त्वनिन्दिता।
वैदेही प्राञ्जलिर्भूत्वा तां नदीमिदमब्रवीत्।। – २/५२/८२
ततस्त्वां देवि सुभगे क्षेमेण पुनरागता।
यक्ष्ये प्रमुदिता गङ्गे सर्वकामसमृद्धिनी।। – २/५२/८५
यानि त्वत्तीरवासीनि दैवतानि च सन्ति हि।
तानि सर्वाणि यक्ष्यामि तीर्थान्यायतनानि च।। – २/५२/९०
कालिन्दीमध्यमायाता सीतात्वेनामवन्दत। – २/५५/१९
विविक्तेषु च तीर्थेषु कृतस्नाता द्विजातयः।
पुष्पोपहारं कुर्वन्ति कुसुमैः स्वयमर्जितैः।। – ३/११/५२
जपं च न्यायतः कृत्वा स्नात्वा नद्यां यथाविधि।
पापसंशमनं रामश्चकार बलिमुत्तमम्।। – २/५६/३२
वेदिस्थल विधानानि चैत्यान्यायतनानि च।
आश्रमस्यानुरूपाणि स्थापयामास राघवः।। – २/५६/३३

कामजं क्रीडा–विलासस्थानम् : गीत–नृत्य, वाद्य–संगीतादि प्रसङ्गश्च –

काचिद् वीणां परिष्वज्य प्रसुप्ता सम्प्रकाशते।
अन्या कक्षगतेनैव मड्डुकेणासितेक्षणा।।
पटहं चारुसर्वाङ्गी न्यस्य शेते शुभस्तनी।– ५/१०/३७–३९
विपञ्चीं परिगृह्याऽन्या नियता नृत्यशालिनी।
मृदङ्गं परिविद्धयाङ्गैः प्रसुप्ता मत्तलोचना।।
पणवेन सहानिन्द्या सुप्ताः कृतमदाश्रया।।
डिण्डिमं परिगृह्यान्या तथैवाऽसक्तडिण्डिमा।
काचिदाडम्बरं नारी भुजसंभोगपीडितम्।
कलशीमपविद्धान्या सुप्ता भवति भामिनी। – ५/१०/४१–४६
आतोद्यानि विचित्राणि परिष्वज्य वरस्त्रियः। – ५/१०/४९
क्रीडितेनापराः क्लान्ता पानविप्रहतास्तथा।
मुरजेषु मृदङ्गेषु चेलिकासु च संस्थिताः।। – ५/११/५–६

पानभूम्यादौ विलाससामग्र्या उपयोगः –

शशक्षतजकल्पेन सुशीतेन सुगन्धिना।
चन्दनेन परार्ध्येन स्वनुलिप्तौ स्वलङ्कृतौ।। – ५/१०/१९
लिलिपुश्च परार्ध्येन चन्दनेन परन्तप। – ६/६०/३४
सर्वकामैरुपेतां च पानभूमिं महात्मनः।
ददर्श कपिशार्दूलस्तस्य रक्षः पतेर्गृहे।। – ५/११/१३
क्षीणपानोत्तमैर्भग्नैः शरावैरभिसंवृताम्।
हतशौण्डामिव ध्वस्तां पानभूमिमसंस्कृतम्।।

रूपाजीवाः –

'रूपाजीवास्तु वादिन्यः'। – २/३६/३
ताश्चित्रवेषाः प्रमदा गायन्त्यो मधुरस्वरम्। – १/१०/११

## लोकव्यवहार प्रसङ्गः

धर्ममर्थं च कामं च समयं चापि लौकिकम्।

अविज्ञाय कथं बाल्यान्मामिहाद्य विगर्हसे।। – ४/१८/४

एवं हि धर्मार्थकाम विषयकैः वस्तुभिर्ज्ञातार्था अपि लोकप्रचलित समयज्ञानं प्राप्नुयुरिति कतिपय लोकव्यवहारा उद्ध्रियन्ते–

शपथग्रहणम् –

प्रत्यक्षं तव सत्येन सुकृतेन च ते शपे।–२/३४/४८

प्रतिजानामिते सत्यमायुधं चाहमालभे। – ३/२७२४

सत्येन च शपाम्यहम् – ४/८/२७

प्रतिज्ञा –

नहि प्रतिज्ञां कुर्वन्ति वितथां सत्यवादिनः।

लक्षणं हि महत्त्वस्य प्रतिज्ञा परिपालनम्।। – ६/१०१/५२

भर्त्सना प्रकारः –

ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे।

धिक् ते सत्त्वं च शौर्यं च यत्त्वया कथितं तदा।

कुलाक्रोशकरं लोके धिक् ते चारित्रमीदृशम्।। ३/५३/७,९

मधुरवाक्यप्रयोगः –

स्मराम्यस्य तु वाक्यानि प्रियाणि मधुराणि च।

हृद्यान्यमृतकल्पानि मनः प्रह्लादनानि च।। – ३/१६/३९

परिहासः –

मन्युर्न खलु कर्तव्यः परिहासो ह्ययं मम। – २/३२/४०

गृहन्यासरक्षणम् –

लक्ष्मणस्य च यद्वेश्म गृहं च यदिदं मम।

अशून्यं कार्यमेकैकं यावदागमनं मम।। – २/३२/२५

## आजीविका वृत्तयः

जीविकार्थ पारम्परिक वंशानुगत वृत्तिग्रहणं सुकरं भवतीत्याह –

यां वृत्तिं वर्तते तातो यां च नः प्रपितामहः।

तां वृत्तिं वर्तसे कच्चिद् या च सत्पथगा शुभा।। – २/१००/७४

पुरोहितः –

पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत्। – ६/१२८/२३

नापितः –

ततः शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्धनाः।

सुखहस्ताः सुशीघ्राश्च राघवं प्रत्यपद्यत।।

विशोधित जटः स्नातश्चित्रमाल्यानुलेपनः। – ६/१२८/१३,१५

मङ्गलव्यवहारिणः –

स पुरोगामिभिस्तूर्यैस्तालस्वस्तिक पाणिभिः।

प्रत्याहरद्भिर्मुदितैर्मङ्गलानि वृतो ययौ।। – ६/१२८/३७

गन्धव्यवसायी –

दिव्यैराश्वासयामासुर्माल्यैर्गन्धैश्च गन्धिभिः। – ६/६०/३४

देवातियाचना (कबुलापाती) –

ततस्त्वां देवि सुभगे क्षेमेण पुनरागता।

पश्ये प्रमुदिता गङ्गे सर्वकामसमृद्धिनी।। – २/५२/८५

स्वस्ति देहि तरामि त्वां पारयेन्मे पतिर्व्रतम्।

यक्ष्ये त्वां गोसहस्रेण सुराघट शतेन च।

स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालिताम्।। – २/५५/१९–२०

रूढ़ो लोकविश्वासः –

निमित्तं लक्षणं स्वप्नं शकुनिस्वरदर्शनम्।

अवश्यं सुखदु:खेषु नराणां परिदृश्यते।। – ३/५२/२

शयान: पुरुषो राम तस्य शैलस्य मूर्धनि।

यत् स्वप्ने लभते वित्तं तत् प्रबुद्धोऽधिगच्छति।। – ३/७३/३३

तदिदं काकतालीयं घोरमासादितं मया। – ३/४१/१६

## नारीधर्म:

आदर्शपत्नी यथा –

रामस्य दयिता भार्या नित्यं प्राणसमाहिता। – १/१/२६

आत्मा हि दारा: सर्वेषां दारसंग्रहवर्तिनाम्। – २/३७/२४

यदा यदा च कौशल्या दासीव च सखीव च।

भार्यावद् भगिनीवच्च मातृवच्चोपतिष्ठति।

सततं प्रियकामा मे प्रिय पुत्रा प्रियंवदा।। – २/१२/६८–६९

कर्तव्यता –

पाणिप्रदानकाले च यत्पुरा त्वग्निसन्निधौ।

अनुशिष्टं जनन्या मे वाक्यं तदपि मे श्रुतम्।।

न विस्मृतं तु मे सर्वं वाक्यै: स्वैर्धर्मचारिणि।

पतिशुश्रूषणान्नार्यास्तपो नाऽन्यद् विधीयते।। – २/११८/८,९

तथाहि –

नगरस्थो वा वनस्थो वा शुभो वा यदि वाऽशुभ:।

यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदया:।।

दु:शील: कामवृत्तो वा धनैर्वा परिवर्जित:।

स्त्रीणामार्य स्वभावानां परमं दैवतं पति:।। – २/११७/२३,२४

साध्वीनां हि स्थितानां तु शीले सत्ये श्रुते शमे।

स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते।। – २/३९/२४

पतिमहत्त्वम् –

मितं ददाति हि पिता मितं माता मितं सुत:।

अमितस्य हि दातारं भर्तारं का न पूजयेत्।। – २/३९/३०

अतोहि –

न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी।
न भोक्तुं नाप्यलंकर्तुं न पानमुपसेवितुम्।। – ५/११/२

नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः।
नापतिः सुखमेधेत या स्यादपि शतात्मजा।। – २/३९/२९

पतिहीना तु या नारी कामं भवतु पुत्रिणी।
धनधान्य समृद्धाऽपि विधवेत्युच्यते बुधैः।। – ४/२३/१२–१३

भर्तुरिच्छाहि नारीणां पुत्रकोट्या विशिष्यते। – २/३५/८

आवरणम् –

न गृहाणि न वस्त्राणि न प्राकारास्तिरस्क्रिया।
नेदृशी राजसत्कारा वृत्तमावरणं स्त्रियाः।। – ६/११४/२७

अनावृतत्वम् –

व्यसनेषु च कृच्छ्रेषु न युद्धेषु स्वयंवरे।
न क्रतौ नो विवाहे वा दर्शनं दूष्यते स्त्रियाः।। – ६/११४/२८

श्वश्रूसेवा –

श्वश्रूणामकरोत् पूजां सर्वासामविशेषतः। – ७/४२/२८

सपत्नीषु भगिनीवद् व्यवहारः –

तथा ज्येष्ठा हि मे माता कौशल्या दीर्घदर्शिनी।
त्वयि धर्मसमाख्याय भगिन्यामिव वर्तते।। – २/७३/१०

ज्येष्ठ भ्रातृपत्नी प्रतिव्यवहारः –

उत्तरं नोत्सहे वक्तुं दैवतं भवती मम। – ३/४५/२८

स्त्री शिक्षा –

तस्याऽहं कुर्वतो नित्यं वेदाभ्यासं महात्मनः।

सम्भृता वाङ्मयी कन्या नाम्ना वेदवती स्मृता।। – ७/१७/९–१०

सती चारित्र्यम् –

धर्षितायास्त्वयाऽनार्य न मे जीवितमिष्यते।।

रक्षस्तस्मात् प्रवेक्ष्यामि पश्यतस्ते हुताशनम्।। – ७/१७/३०–३१

वर्जनीयतयां असतीस्वभावमाह –

असत्यः सर्वलोकेऽस्मिन् सततं सत्कृताः प्रियैः।

भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः।

एष स्वभावो नारीणामनुभूय पुरा सुखम्।

अल्पमप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि।।

न कुलं न कृतं विद्यां न दत्तं नापि संग्रहम्।

स्त्रीणां गृहणाति हृदयमनित्य हृदया हि ताः।।

–२/३९/२०–२१/२३

स्वभाव प्रसङ्गे –

वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि।

स्वभावस्त्वेष नारीणामेषु लोकेषु दृश्यते।। – ३/४५/२९

एषा हि प्रकृतिः स्त्रीणामासृष्टे रघुनन्दन।

समस्थमनुरज्यन्ते विषमस्थं त्यजन्त्यपि।।

शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा।

गरुडानिलयोः शैध्र्यमनुगच्छन्ति योषितः।

इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता।

श्लाघ्या च व्यपदेश्या च यथा देवीष्वरुन्धती।। – ३/१३/५–७

नारी सौन्दर्यम् –

समाः शिखरिणः स्निग्धाः पाण्डुरा दशनास्तव।

विशाले विमले नेत्रे रक्तान्ते कृष्णतारके।।

विशालं जघनं पीनमूरू करिकरोपमौ।

एतावुपचितौ वृत्तौ संहतौ संप्रगल्भितौ।।

पीनोन्नतमुखौ कान्तौ स्निग्धतालफलोपमौ।

मणि प्रवेकाभरणौ रुचिरौ ते पयोधरौ।। – ३/४६/१८,१९,२०

करान्तमितमध्याऽसि सुकेशे संहतस्तनि।

रूपमग्र्यं च लोकेषु सौकुमार्यं वयश्च ते।। – ३/४६/२२–२३

आभूषणानि –

जातरूपमयैमुख्यैरङ्गदैः कुण्डलैः शुभैः।

सहेमसूत्रैर्मणिभिः केयूरैर्वलयैरपि।। – २/३२/५

हारं च हेमसूत्रं च (भार्यायै सौम्य हारय)।

रशनां चाथ सा सीता दातुमिच्छति ते सखी।। – २/३२/७

स्त्री संरक्षणे अधिकृताः –

गतिरेषा पतिर्नार्या द्वितीयागतिरात्मजः।

तृतीया ज्ञातयो राजन् चतुर्थी नैव विद्यते।। – २/६१/२४

०००

# सप्तमं संहिता काण्डम्

## नीति–संहिता

### (अक्ष–मालिका)

'समुपासन्त संहिताः' ( ) इत्यभियुक्तोक्ते शासनानुशासनपरां नीतिसंहितां सांविधानिक पद्धत्या परिपालयतां सतां साध्ये सिद्धिरास्तामतः प्राशासनिकीं सामाजिकीं वैयक्तिकीञ्च संहिताधारां प्रवाहयितुमुपक्रमते –

अ –

अकामां कामयानस्य शरीरमुपतप्यते।
इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना।। – ५/२२/४२
अकीर्तिर्निन्द्यते देवैः कीर्तिर्लोकेषु पूज्यते।
कीर्त्यर्थं तु समारम्भः सर्वेषां सुमहात्मनाम्।। – ७/४५/१३
अकुर्वन्तोऽपि पापानि शुचयः पापसंश्रयात्।
परपापैर्विनश्यन्ति मत्स्या नागह्रदे यथा।। – ३/३८/३६
अङ्गप्रत्यङ्गजः पुत्रो हृदयाच्चापि जायते।
तस्मात् प्रियतमो मातुः प्रियत्वान्न तु बान्धवः।। – २/७४/१४
अतिमानिनमग्राह्यमात्मसंभावितं नरम्।
क्रोधनं व्यसने हन्ति स्वजनोऽपि नराधिपम्।। – ३/३३/१६
अतुष्टं स्वेषु दारेषु चपलं चपलेन्द्रियम्।
नयन्ति निकृतिप्रज्ञं परदाराः पराभवम्।।
अत्येति रजनी या तु सा न प्रतिनिवर्तते।। – २/१०४/१९
अधर्मः सुमहान्नाथ भवेत्तस्य तु भूपतेः।
यो हरेद् वलिषड्भागं न च रक्षति पुत्रवत्।।

अध्रुवे हि शरीरे यो न करोति तपोऽर्जनम्।
स पश्चात्तप्यते मूढो मृतो गत्वात्मनो गतिम्।। – ७/१५/२३

अनभिज्ञाय शास्त्रार्थं पुरुषाः पशुबुद्धयः।
प्रागल्भ्याद् वक्तुमिच्छान्ति मन्त्रेष्वभ्यन्तरीकृताः।।

अनागतविधानं तु कर्तव्यं शुभमिच्छता।
आपदं शङ्कमानेन पुरुषेण विपश्चिता।।–३/२४/११

अनार्यस्त्वार्य संकाशः शौचाद्धीनस्तथाशुचिः।

अनिर्वेदं च दाक्ष्यं च मनसश्चापराजयम्।
कार्यासिद्धिकराण्याहुस्तस्मादेतद् ब्रवीम्यहम्।। – ४/४९/६

अनिर्वेदः श्रियो मूलम्, अनिर्वेदः परं सुखम्।–५/१२/२०

अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः।। – ५/१२/३/१

अनुपायेन कर्माणि विपरीतानि यानि च।
क्रियमाणानि दुष्यन्ति हविष्य प्रयतेष्विव।। – ६/१२/३१

अप्रमत्तश्च यो राजा सर्वज्ञो विजितेन्द्रियः।
कृतज्ञो धर्मशीलश्च स राजा तिष्ठते चिरम्।। – ३/३३/२०

अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः।
राजदण्डपरामृष्टास्तिष्ठन्ते नापराधिनः। – ६/२९/१२

अमित्राणां वधे युक्तो मित्राणां संग्रहे रतः।
त्रिवर्ग फलभोक्ता च राजा धर्मेण युज्यते।। – ४/३८/२२

अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम्।
वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः।। – ३/३३/५

अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्युतः।
स्वजनं च जनस्थाने निहतं नावबुध्यसे।। – ३/३३/११

अरयश्च मनुष्येण विज्ञेयाश्छद्मचारिणः।

विश्वस्तानामविश्वस्ताश्छिद्रेषु प्रहरन्त्यपि ।। – ४/२/२२

अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह।

गुणतः संग्रहं कुर्याद् दोषतस्तु विसर्जयेत्।। – ६/१७/४१

अर्थिनामुपपन्नानां पूर्वंचाप्युपकारिणाम्।

आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः।। – ४/३०/७१

अर्थी येनाऽर्थकृत्येन संव्रजत्यविचारयन्।

तमर्थमर्थशास्त्रज्ञाः प्राहुरर्थ्याः सुलक्ष्मण।। – ३/४३/३४

अवश्यं कुर्वतां तस्य दृश्यते कर्मणः फलम्।

परं निर्वेदमागम्य नहि नोन्मीलनं क्षमम्। – ४/४९/८

अवश्यं लभते कर्ता फलं पापस्य कर्मणः।

घोरं पर्यागते काले द्रुम–पुष्पमिवार्तवम् – ३/२९/८

अवज्ञया न दातव्यं कस्यचिल्लीलयाऽपि वा।

अवज्ञया कृतं हन्याद् दातारं नात्र संशयः।। – १/१३/३३

अवाप्नुयामः कीर्त्तिं वा निहत्वा शत्रुमाहवे।

निहता वीरलोकस्य भोक्ष्यामो वसु वानराः।। – ६/६६/२५

अविज्ञाय फलं यो हि कर्मत्वेनावधावति।

न शोचेत् फलवेलायां यथा किंशुकसेचकः।। – २/६३/९

असङ्कल्पितमेवेह यदकस्मात् प्रवर्तते।

निवर्त्यारम्भमारब्धं ननु दैवस्य कर्म तत्।। – २/२२/२४

असत्यसंधस्य सतश्चलस्यास्थिरचेतसः।

नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम्।। – २/१०९/१८

अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह।

आ –

आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः।। – २/१०५/२०

आढ्ये वापि दरिद्रो वा दु:खित: सुखितोऽपि वा।
निर्दोषश्च सदोषश्च वयस: परमा गति:।। – ४/८/८

आत्मप्रशंसिनं दुष्टं धृष्टं विपरिधावकम्।–६/२१/१५
सर्वत्रोत्सृष्टदण्डं च लोक: सत्कुरुते नरम्।। – ६/२१/१६

आम्रं छित्त्वा कुठारेण निम्बं परिचरेत्तु क:।
यश्चैनं पयसा सिञ्चेन्नैवास्य मधुरोभवेत्।। – २/३५/१६

आभिजात्यं हिते मन्ये यथा मातुस्तथैव च।
नहि निम्बात् स्रवेत् क्षौद्रं लोके निगदितं वच:।। – २/३५/१७

आत्मविद्भिर्विगृह्य त्वं देवगन्धर्व दानवै:।
अयुक्तचारश्चपल: कथं राजा भविष्यसि।

आत्मानमनुशोच त्वं किमन्यमनुशोचसि।
आयुस्तु हीयते यस्य स्थितस्यास्य च गतस्य च।।–२/१०५/२१

आराधिता हि शीलेन प्रयत्नोश्चोपसेवता:।
राजान: सम्प्रसीदन्ति प्रकुप्यन्ति विपर्यये।। – २/२७/३५

आर्तोवा यदि वा दृप्त: परेषां शरणागत:।
अपि प्राणान् परित्यज्य रक्षितव्य: कृतात्मना।। – ६/१८/२८

आत्मानं नियमैस्तैस्तै: कर्शयित्वा प्रयत्नत:।
प्राप्तये निपुणैर्धर्मो न सुखाल्लभते सुखम्।। – ३/९/३१

इ –

इन्द्रियाणां प्रदुष्टानां हयानामिव धावताम्।
कुर्वीत धृत्या सारथ्यं संहृत्येन्द्रियगोचरम्।। – ७/प्र०२/२३

उ –

उत्साहो बलवानार्य नात्युत्साहात् परं बलम्।
सोत्साहस्य हि लोकेषु न किञ्चितदपि दुर्लभम्।। – ४/१/१२१

उद्वेजनीयो भूतानां नृशंस: पापकर्मकृत्।

त्रयाणामपि लोकानामीश्वरोऽपि न तिष्ठति।।

उपकारेण वीरस्तु प्रतिकारेण युज्यते।

अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः।। – ४/२७/४५

उपभुक्तं यथा वासः स्रजोऽपि मृदिता यथा।

एवं राज्यात्परिभ्रष्टः समर्थोऽपि निरर्थकः।। – ३/३३/१९

उपायकुशलं दैवं भृत्यसन्दूषणे रतम्।

शूरमैश्वर्यकामं च यो न हन्ति स हन्यते।। – २/१००/२९

ऋ –

ऋद्धिं रूपं बलं पुत्रान् वित्तं शूरत्वमेव च।

प्राप्नुवन्ति नरा लोके निर्जितं पुण्य कर्मभिः।। – ७/१५/२६

ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे।

सत्यवादी हि लोकेऽस्मिन् परं गच्छति चाक्षयम्।।–२/१०९/११

ए –

एकः पालयते लोक एकः पालयते कुलम्।

मज्जत्येको हि निरये एकः स्वर्गे महीयते।। – २/१०९/१५

एकाकिनं प्रमत्तं वा नयेयुः दर्शनैः क्षयम्।

तस्मात्परमदुर्धर्षः सैन्यैः परिवृत्तो व्रज।। – ६/६५/२४

एको हि कुरुते पापं कालपाशवशं गतः।

नीचेनात्मापचारेण कुलं तेन विनश्यति।। – ६/३८/७

ऐ –

ऐहलौकिक पारक्यं कर्म पुंभिर्निषेव्यते।

कर्माण्यपि तु कल्यानि लभते काममास्थितः।।–६/६४/९

औ –

औरस्यानपि पुत्रान् हि त्यजन्त्यहितकारिणः।

समर्थान् सम्प्रगृहणन्ति जनानपि नराधिपाः। – २/२६/३६

क –

कथं च धर्मार्थविनीतबुद्धिः परावरप्रत्ययनिश्चितार्थः।
भवद्विधः कोपवशे हि तिष्ठेत्कोपं न गच्छन्ति हि सत्त्ववन्तः।।

— ५/५२/१६

कर्म लोक विरुद्धं तु कुर्वाणं क्षणदाचर।
तीक्ष्णं सर्वजनो हन्ति सर्पं दुष्टमिवागतम्।। — ३/२९/४

कश्चिदाम्रवणं छित्त्वा पलाशांश्च निषिञ्चति।
पुष्पं दृष्ट्वा फले गृघ्नुः स शोचति फलागमे।। — २/६३/८

क्व च शास्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च।
व्याविद्धमिदमस्माभिर्देशधर्मस्तु पूज्यताम्।। — ३/९/२७

कस्य चिन्नहि दुर्बुद्धेश्छन्दतो जायते मतिः।
यादृशं कुरुते कर्म तादृशं फलमश्नुते।। — ७/१५/२५

कायेन कुरुते पापं मनसा संप्रधार्य च।
अनृतं जिह्वया चाह त्रिविधं कर्म पातकम्।। — २/१०९/२१

कार्ये कर्मणि निर्दिष्टे यो बहून्यपि साधयेत्।
पूर्वकार्याऽविरोधेन स कार्यं कर्तुमर्हति।। — ५/४१/५

कालपाशपरिक्षिप्ता भवन्ति पुरुषा हि ये।
कार्याकार्यं न जानन्ति ते निरस्तषडिन्द्रियाः।। — ३/३०/१५

काले धर्मार्थ कामान् यः संमन्त्र्य सचिवैः सह।
निषेवेतात्मवॉल्लोके न स व्यसनमाप्नुयात्।। — ६/६३/१२

क्रोधः प्राणहरः शत्रुः क्रोधो मित्रमुखो रिपुः।
क्रोधो ह्यसिर्महान् तीक्ष्णः सर्वः क्रोधेऽपकर्षति।। — ७/प्र०२/२१

कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये।
तान् मृदानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते।। — ४/३०/७३

ग –

गुणदोषकृतं जन्तुः स्वकर्मफल हेतुकम्।

अव्यग्रस्तदवाप्नोति सर्वं प्रेत्य शुभाशुभम्। – ४/२१/२

गुरुलाघवमर्थानामारम्भे कर्मणां फलम्।

दोषं वा यो न जानाति स बाल इति होच्यते।। – २/६३/७

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।

उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम्। – २/२१/१३

गृह्यते यदि रोषेण त्वादृशोऽपि विचक्षणाः।

ततः शास्त्रविपश्चित्त्वं श्रम एव हि केवलम्।। – ६/५२/८

च –

चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा।

एतच्च नियतं नित्यं त्वयि चानुत्तमं यशः।। – ३/३६/५

चपलश्चपलैः सार्धं वानरैरकृतात्मभिः।

जात्यन्ध इव जात्यन्धैर्मन्त्रयन् प्रेक्षसे नु किम्।। – ४/१८/१६

चारेण विदितः शत्रुः पण्डितैर्वसुधाधिपैः।

युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते।। – ६/२९/२१

चित्तनाशाद् विपद्यन्ते सर्वाण्येवेन्द्रियाणि हि।

क्षीण स्नेहस्य दीपस्य संरक्ता रश्मयो यथा।। – २/६४/७३

छ –

छादयित्वाऽऽत्मभावं हि चरन्ति शठबुद्धयः।

प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुमहान् भवेत्।। – ६/१७/४०

ज –

जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस।

हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा।। – ६/१६/३

त –

तदल विक्लवां बुद्धिं राजन् सर्वार्थनाशिनीम्।
पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्यापकर्षणः।। – ६/२/१३

तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते।
निश्चेष्टाःक्षत्रिया मन्दाः सर्वे चण्डस्य बिभ्यति।। – ६/२/१९

तपते यजते चैव यच्च दानं प्रयच्छति।
क्रोधेन सर्वं हरति तस्मात् क्रोधं विसर्जयेत्।। – ७/प्र.२/२२

तस्मात् पुत्रेषु दारेषु मित्रेषु च धनेषु च।
नातिप्रसङ्गः कर्तव्यो विप्रयोगो हि तैर्ध्रुवम्।। – ७/५२/१२

तस्यच्छिद्राणि मार्गस्व स्वच्छिद्राणि च लक्षय।
चक्षुषा धनुषात्मानं गोपायस्व समाहितः।। – ६/५९/५०

तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम्।
व्यसने सर्वभूतानि नाभिधावन्ति पार्थिवम्।। – ३/३३/१५

द –

दण्ड एव वरो लोके पुरुषस्येति मे मतिः।
धिक् क्षमामकृतज्ञेषु सान्त्वदानमथापि वा।। – ६. २२/४९

दमः शमः क्षमा धर्मो धृतिः सत्यं पराक्रमः।
पार्थिवानां गुणा राजन् दण्डश्चाऽप्यपकारिषु।। – ४/१७/१९

दानं दया सतां पूजा व्यवहारेषु चार्जवम्।
एष राम परोधर्मो रक्षणात् प्रेत्य चेह च।। – ७/प्र०२/१०

देशे देशे कलत्राणि देशे देशे च बान्धवाः।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः।। – ६/१०१/१५

दैवमेव परं मन्ये पौरुषं तु निरर्थकम्।
दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः।।

दृढं खल्ववलिप्तोऽसि भयेष्वपि च निर्भयः।

वाच्यावाच्यं ततोहि त्वं मृत्योर्वश्यो न बुध्यसे।। – ३/३०/१४

ध –

धनत्यागः सुखत्यागो देशत्यागोऽपि वाऽनघ।

वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम्।। – ४/८/९

धन्याः खलु महात्मानो ये बुद्ध्या कोपमुत्थितम्।

निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा।। – ४/५५/३

धर्ममर्थं च कामं च काले यस्तु निषेवते।

विभज्य सततं वीर स राजा हरिसत्तम।। – ४/३८/२०

धर्मलोपो महांस्तावत् कृते ह्यप्रतिकुर्वतः।

अर्थलोपश्च मित्रस्य नाशे गुणवतो महान्।।

धर्माद् राज्यं धनं सौख्यमधर्माद् दुःखमेव च।

तस्माद् धर्मं सुखार्थाय कुर्यात्पापं विसर्जयेत्।। – ७/१५/२३

न –

न चातिप्रणयः कार्यः कर्तव्योऽप्रणयश्च ते।

उभयं हि महादोषं तस्मादन्तर दृग्भव।। – ४/२२/२३

न चिरं पापकर्मणः क्रूरा लोकजुगुप्सिताः।

ऐश्वर्यं प्राप्य तिष्ठन्ति शीर्णमूला इव द्रुमाः।।–३/२९/७

न चिरात्प्राप्यते लोके पापानां कर्मणां फलम्।

सविषाणामिवान्नानां भुक्तानां क्षणदाचर।। – ३/२९/९

न तत्कुर्यादसिस्तीक्ष्णः सर्पो वा व्याहतः पदा।

अरिर्वा नित्यसंक्रुद्धो यथाऽऽत्मा दुरनुष्ठितः।। – ७/प्र०२/२५

नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमिते रवौ।

आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम्।। – २/१०५/२४

ननु सद्यो विनीतस्य दृश्यते कर्मणः फलम्।

कालोऽप्यङ्गीभवत्यत्र सस्यानामिव पंक्तये।। – ३/४९/२७

न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमर्हति।

एवमेव नरव्याघ्रः परलीढं न मंस्यते।।

नयनाभ्यां प्रसुप्तो वा जागर्ति नय चक्षुषा।

व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः।। – ३/३३/२१

नयश्च विनयश्चोभौ निग्रहानुग्रहा अपि।

राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः।। – ४/१७/३२

न स संकुचितः पन्था येन वाली हतो गतः।

समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः।। – ४/३४/१८

न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः।

यद्‌विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः।। – ६/१८/१५

नहि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया।

शक्यं मूर्खसहायेन पापेनाविदितात्मना।। – ६/४१/६९

नहि धर्मार्थ सिद्ध्यर्थं पानमेवं प्रशस्यते।

पानादर्थश्च धर्मश्च कामश्च परिहीयते।। – ४/३३/४६

नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः।

घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः।। – ६/१६/७

नानुतिष्ठति कार्याणि भयेषु न बिभेति च।

क्षिप्रं राज्याच्च्युतो दीनस्तृणैस्तुल्यो भवेदिह।। – ३/३३/१७

न्यायेन राजकार्याणि यः करोति दशानन।

न स सन्तप्यते पश्चान्निश्चितार्थमतिर्नृपः।। – ६/१२/३०

नित्यमन्योऽन्य संहृष्टा व्यसनेष्वाततायिनः।

प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहा:।। – ६/१६/५

निरुत्साहस्य दीनस्य शोकपर्याकुलात्मन:।

सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति।। – ६/२/६

नैवार्थेन न कामेन विक्रमेण न चाज्ञया।

शक्या दैवगतिर्लोके निवर्तयितुमुद्यता।।

नैवंविधमसत्कारं राघवो मर्षयिष्यति।

बलवानिव शार्दूलो वालधेरभिमर्शनम्।। – २/६१/१९

नैवं विनष्टा: शोचन्ते क्षत्रधर्मव्यवस्थिता:।

वृद्धिमाशंसमाना ये निपतन्ति रणाजिरे।। – ६/१०९/१५

परदाराभिगमनं विना वैरं च रौद्रता।

मिथ्यावाक्यं न ते भूतं न भविष्यति राघव।। – ३/९/४

परावमन्ता विषयेषु सङ्गवान् न देशकालप्रविभागतत्त्ववित्।

अयुक्तबुद्धिर्गुणदोषनिश्चये विपन्नराज्यो न चिराद् विपत्स्यते।।

– ३/३३/२३

पापस्य हि फलं दु:खं तद्भोक्तव्यमिहात्मना।

तस्मादात्माभिघातार्थं मूढ: पापं करिष्यति।। – ७/१५/२४

पापानुवन्धो वै यस्य कर्मण: को नु तत् पुमान्।

कुर्वीत लोकाधिपति: स्वयंभूर्भगवानपि।।

प्राप्तव्यानेव प्राप्नोति गन्तव्यानेव गच्छति।

लब्धव्यानेव लभते दु:खानि च सुखानि च।।

प्रधानं साधकं वैद्यं धर्मशीलं च राक्षस।

ज्ञातयोऽप्यवमन्यन्ते शूरं परिभवन्ति च।। – ६/१६/४

प्रशमश्च क्षमा नैवमार्जवं प्रियवादिता।–६/२१/१४

असामर्थ्यफला ह्येते निर्गुणेषु सतां गुणाः।। – ६/२१/१५

पूर्वं कृतार्थो मित्राणां न तत्प्रतिकरोति यः।

कृतघ्नः सर्वभूतानां स वध्यः प्लवगेश्वर।। – ४/३४/१०

पूर्वमर्थं प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि।

राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः।। – १/२१/२

ब –

बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम्।

न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप।। – ६/१८/२७

बहवः साधवो लोके युक्ता धर्ममनुष्ठिताः।

परेषामपराधेन विनष्टाः सपरिच्छदाः।। – ३/३९/२१

बहूनां स्त्रीसहस्राणां बहूनां चोपजीविनाम्।

परिवादोपवादो वा राघवे नोपपद्यते।। – २/१२/२७

बालिशस्तु नरो नित्यं वैक्लव्यं योऽनुवर्तते।

स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले।। – ४/७/१०

बुद्धिविज्ञानसम्पन्न इङ्गितैः सर्वमाचर।

न ह्यबुद्धिं गतो राजा सर्वभूतानि शास्ति हि।। – ४/२/१८

भ –

भिन्नमर्याद निर्लज्ज चारित्रेष्वनवस्थित।

दर्पान्मृत्युमुपादाय शूरोऽहमिति मन्थसे।। – ६/१०३/१४

भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः।–२/३/४२

कामक्रोधसमुत्थानि त्यजेथा व्यसनानि च।। – २/३/४३

म –

मनसा कर्मणा वाचा चक्षुषा च समाचरेत्।

श्रेयो लोकस्य चरतो न द्वेष्टि न च लिप्यते।। – ७/प्र०२/२४

मा च बुद्धिरधर्मे त्वं कुर्या राजन् कथञ्चन।

बुद्धिमन्तो हि राजानो ध्रुवमश्नन्ति मेदिनीम्।। – ७/४०/११

मातरं पितरं विप्रमाचार्यमवमन्यते।

स पश्यति फलं तस्य प्रेतराजवशं गतः।। – ७/१५/२१

माता पितृ सुतस्नेह भार्याबन्धुमनोरमैः।

मोहितोऽयं जनो ध्वस्तः क्लेशं स्वं नावबुध्यते।। – ७/२०/१४

मित्रं ह्यर्थगुणश्रेष्ठं सत्यधर्मपरायणम्।

तद्द्वयं तु परित्यक्तं न तु धर्मे व्यवस्थितम्।। – ४/३३/४८

मृत्युकाले यथा मर्त्यो विपरीतानि सेवते।

मुमूर्षूणां च सर्वेषां यत्पथ्यं तन्न रोचते।। – ३/५३/१७

**य –**

यत्कृते पितरः पुत्राज्जनयन्ति शुभार्थिनः।

परलोकहितार्थाय तस्य कालोऽयमागतः।। – १/६२/९

यत्कृत्या न भवेद् धर्मो न कीर्तिर्न यशो ध्रुवम्।

शरीरस्य भवेत्खेदः कस्तत्कर्म समाचरेत्।। – ३/५०/१९

यथा पुष्करपत्रेषु पतितास्तोय बिन्दवः।

न श्लेषमभिगच्छन्ति तथाऽनार्येषु सौहृदम्।। – ६/१६/११

यथा शरदि मेघानां सिञ्चतामपि गर्जताम्।

न भवत्यम्बुसंक्लेदस्तथाऽनार्येषु सौहृदम्।। – ./१६/१२

यथा मधुकरस्तर्षाद् रसं विन्दन्न तर्षति।

तथा त्वमपि तत्रैव तथाऽनार्येषु सौहृदम्।। – ६/१६/१३

यथा मधुकरस्तर्षात्कासपुष्पं पिबन्नपि।

रसमत्र न विन्देत तथाऽनार्येषु सौहृदम्। – ६/१६/१४

यथा पूर्व गजः स्नात्वा गृह्य हस्तेन वै रजः।

दूषयत्यात्मनो देहं तथाऽनार्येषु सौहृदम्।। – ६/१६/१५

यदा चरति कल्याणि शुभं वा यदि वाऽशुभम्।

तदेव लभते भद्रे कर्ता कर्मजमात्मनः।।–२/६३/६

यदि दोषो महांस्तस्मिन् त्यज्यतामविशङ्कितम्।

गुणान् यदि बहून् ज्ञात्वा संग्रहः क्रियतां नृप।। – ६/१७/४२

यस्तु कालव्यतीतेषु मित्रकार्येषु वर्तते।

स कृत्वा महतोऽप्यर्थान् न मित्रार्थेन युज्यते।। – ४/२९/१४

यस्मात्पश्यन्ति दूरस्थान् सर्वानर्थान्नराधिपाः।

चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः।। – ३/३३/१०

यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिपः।

सामान्येतानि सर्वाणि स राज्यं महदश्नुते।। – ४/२९/११

यः खल्वपि वनं प्राप्य मृगव्यालनिषेवितम्।

न पिबेन्मधु संप्राप्य स नरो बालिशो भवेत्।। – ६/१३/२

यः पश्चात् पूर्वकार्याणि कर्माण्यभिचिकीर्षति।

पूर्वं चापरकार्याणि स न वेद नयानयौ।। – ६/१२/३२

यः समुत्पतितं क्रोधं क्षमयैव निरस्यति।

यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते।। – ५/५५/६

यः स्वपक्षं परित्यज्य परपक्षं निषेवते।

स स्वपक्षे क्षये जाते पश्चात्तैरेव हन्यते।। – ६/८७/१६

युद्धे कापुरुषैर्नित्यं भवद्भिः प्रियवादिभिः।

राजानमनुगच्छद्भिः सर्वं कृत्यं विनाशितम्।। – ६/६५/६

येन धर्मो न विज्ञातो न वृत्तं न कुलं तथा।

राक्षस्या नीचया बुद्धया येन तद्गर्हितं कृतम्।। – ६/३८/५

यस्तु राजा स्थितोऽधर्मे मित्राणामुपकारिणाम्।

मिथ्याप्रतिज्ञां कुरुते को नृशंसतरस्ततः।। – ४/३४/८

ये न रक्षन्ति विषयमस्वाधीनं नराधिपाः।

वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपः।। – ३/३३/५

येषां चाराश्च कोशश्च नयश्च जयतां वर।

अस्वाधीना नरेन्द्राणां प्राकृतैस्ते जनैः समाः।। – ३/३३/९

यो हि दत्त्वा द्विपश्रेष्ठं कक्ष्यायां कुरुते मनः।

रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम्।। – २/३७/३

यो हि मोहाद् विषं पीत्वा नावगच्छति दुर्मतिः।

स तस्य परिणामान्ते जानीते कर्मणः फलम्। – ७/१५/१९

र –

रजतं वा सुवर्णं वा शुभान्याभरणानि च।

अविभक्तानि साधूनामवगच्छन्ति साधवः।। – ४/८/७

राजा धर्मश्च कामश्च द्रव्याणां चोत्तमो निधिः।

धर्मः शुभं वा पापं वा राजमूलं प्रवर्तते।। – ३/५०/१०

राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर।

न चातिप्रतिकूलेन नाविनीतेन राक्षस।। – ३/४१/११

ल –

लोभात्पापानि कुर्वाणः कामाद् वा यो न बुद्धयते।

हृष्टः पश्यति तस्यान्तं ब्राह्मणी करकादिव।। – ३/२९/५

व –

वयसः पतमानस्य स्रोतसो वाऽनिवर्तिनः।

आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः।। – २/१०५/३१

वसेत् सह सपत्नेन क्रुद्धेनाशीविषेण च।

न तु मित्रप्रवादेन संवसेच्छत्रुसेविना।। – ६/१६/२

व्यसने वार्थकृच्छ्रे वा भये वा जीवितान्तगे।

विमृशंश्च स्वया बुद्ध्या धृतिमान्नावसीदति।। – ४/७/९

वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित्।

नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित्।।–५/५५/५

वाम: कामो मनुष्याणां यस्मिन् किल निबध्यते।

जने तस्मिंस्त्वनुक्रोश: स्नेहश्च किल जायते।। – ५/२२/४

विक्रान्ता बलवन्तो वा ये भवन्ति नरर्षभा:।

कथयन्ति न ते किञ्चित् तेजसा चातिगर्विता:।।

विद्यते गोषु सम्पन्नं विद्यते ज्ञातितो भयम्।

विद्यते स्त्रीषु चापल्यं विद्यते ब्राह्मणे तप:।। – ६/१६/९

विद्यास्वभिविनीतो यो राजा राजन् ! नयानुग:।

स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे।। – ६/३५/७

विनाशे वहवो दोषा जीवन् प्राप्नोति भद्रकम्।

तस्मात्प्राणान् धरिष्यामि ध्रुवो जीवति संगम:।। – ५/१३/४७

विगृह्यासनमप्याहुर्दुर्वलेन बलीयसा।

आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बल:।। – ४/५४/१२

श –

शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम्।

सत्येन परिगृह्णाति स वीर: पुरुषोत्तम:।। – ४/३०/७२

शुष्ककाष्ठैर्भवेत्कार्यं लोष्ठैरपि च पांसुभि:।

न तु स्थानात्परिभ्रष्टै: कार्यं स्याद् वसुधाधिपै:।। – ३/३३/१८

शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम्।

विनष्टे वा प्रणष्टे वा शोक: सर्वार्थनाशन:।। – ६/२/१५

शूराश्च बलवन्तश्च कृतास्त्राश्च नरा रणे।
कालाभिपन्ना: सीदन्ति यथा वालुकसेतव:।। – ६/१६/२४

स –

सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम्।
लुब्धं न वहु मन्यन्ते श्मशानाग्निरिव प्रजा:।। – ३/३३/३

सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम्।
विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे।। – २/१२/३०

सत्येन लोकाञ्जयति द्विजान् दानेन राघव:।
गुरूञ्छुश्रूषया वीरो धनुषा युधि शात्रवान्।। – २/१२/२९

सत्त्वाभिजनसम्पन्न: सानुक्रोशो जितेन्द्रिय:।
कृतज्ञ: सत्यवादी च राजा लोके महीयते।। – ४/३४/७

सन्दधानो हि कालेन विगृह्णंश्चारिभि: सह।
स्वपक्षं वर्धनं कुर्वन् महदैश्चर्यमश्नुते।। – ६/३५/८

स भार: सौम्य भर्तव्यो यो नरं नावसादयेत्।
तदन्नमपि भोक्तव्यं जीर्यते यदनामयम्।। – ३/५०/१८

स्मृत्वा वियोगजं दु:खं त्यज स्नेहं प्रिये जने।
अतिस्नेहपरिष्वङ्गाद् वर्तिरार्द्राऽपि दह्यते।। – ४/१/११६

सर्वे क्षयान्ता निचया: पतनान्ता: समुच्छ्रया:।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्।। – ७/५२/११

स्वयं कार्याणि य: काले नानुतिष्ठति पार्थिव:।
स नु वै सह राज्येन तैश्च कार्यैर्विनिश्यति।। – ३/३३/४

स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन रावण।
रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथा।। – ३/४१/१४

स्वर्गो धनं वा धान्यं वा वि[illegible] पुत्रा: सुखानि च।
गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम्।। – २/३०/३६

सान्त्वयन् सर्वभूतानि राम: शुद्धेन चेतसा।

गृह्णाति मनुजव्याघ्रः प्रियैर्विषयवासिनः।। – २/१२/२८

स सुहृद् यो विपन्नार्थं दीनमभ्युपपद्यते।

स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते।। – ६/६३/२७

स्त्रीषु शूर विनाथासु परदाराभिमर्शनम्।

कृत्वा कापुरुषं कर्म शूरोऽहमिति मन्यसे।। – ६/१०३/१३

सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते।

राम तेन तु दुर्जीवं यः परानुपजीवति।। – २/१०५/७

सुनीतं हितकामेन वाक्यमुक्तं दशानन।

न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः।। – ६/१६/२०

सुलभाः पुरुषा राजन् सततं प्रियवादिनः।

अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः।। – ६/१६/२१

ह –

हित्वा धर्मं तथार्थं च कामं यस्तु निषेवते।–३/३८/२१

स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते।। – ४/३८/२२

हीनार्थस्तु समृद्धार्थं को रिपुं प्राकृतं यथा।

निश्चितं जीवितत्यागे वशमानेतुमिच्छति।। – ६/६४/१७

हीयमानेन कर्तव्यो राजा सन्धिः समेन च।

न शत्रुमवमन्येत ज्यायान् कुर्वीत विग्रहम्।। – ६/३५/९

क्ष –

क्षत्रियाणामिह धनुर्हुताशस्येन्धनानि च।

समीपतः स्थितं तेजो बलमुच्छ्रयते भृशम्।। – ३/९/१५

०००

# सुभाषितानि
## (अक्ष–मालिका)

*'कल्याणी वत गाथेयं लौकिकी प्रतिभाति मे' इति लोकप्रचलितां सुभाषितवलीं नीति–रीति–प्रीतिपरं ग्रथ्नाति –*

अ –

अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः। – ४/२७/४५

अकाले दुर्लभो मृत्युः – ५/२५/१२

अग्निसंयोगवद्धेतुः शस्त्रसंयोग उच्यते। – ३/९/२३

अतिस्नेहपरिष्वङ्गाद् वर्तिरार्द्राऽपि दह्यते। – ४/१/११६

अतिस्नेहोऽपि कालेऽस्मिन् मरणायोपकल्पते। – ६/४६/३७

अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता। –

अधनेनार्थकामेन नार्थ शक्यो विचिन्वता। – ६/८३/३८

अधर्मसंश्रितो धर्मो विनाशयति राघव। – ६/८३/३०

अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम्। – ६/६५/४

अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः। – ६/८३/१४

अनार्याः खलु यद्भीतास्त्यक्त्वा वीर्यं प्रधावत। – ६/६६/२१

अन्तकाले तु भूतानि मुह्यन्तीति पुरा श्रुतिः। – २/१०६/१३

अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम्। – ५/१२/१०

अन्तर्गतमपि व्यक्तमाख्याति हृदयं हृदा। – १/७७/२८

अन्योन्यस्य नो रक्षा कर्तव्या पुरुषर्षभ। – २/५२/९६

अपराधं विना हन्तुं लोको वीर न मंस्यते। – ३/९/२५

अपकारोऽरिलक्षणम् । –४/८/२१

अप्रियस्य च पथ्यस्य श्रोता वक्ता च दुर्लभः। – ३/३७/२

अर्थो हि नष्टकार्यार्थैरयत्नेनाधिगम्यते। – ४/१/१२०

अवश्यं प्राण्निः प्राणा रक्षितव्या कथंचन। –

अवश्यं लभते कर्ता फलं पापस्य कर्मणः। – ३/२९/८

अविघ्नं क्रियतां सर्वं किमर्थं हि विलम्बसे। – १/७३/१६

अहो कामस्य वामत्वम्। – ४/१/६८

अहं तस्य प्रभावज्ञो न युद्धं तेन ते क्षमम्। – ३/३९/१९

अहोरात्रं च सन्तोषः कर्तव्यो नियमात्मना। – २/२८/१२

आ –

आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम्। – ५/२१/८

आत्मा हि दाराः सर्वेषां दारसंग्रहवर्तिनाम्। – २/३७/२४

आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः। – ४/३०/७१

आत्मा सुखे नियोक्तव्यः। –

आम्रं छित्वा कुठारेण निम्बं परिचरेत्तु कः। – २/३५/१६

आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः। – २/१४/३

इ –

इदं हि परुषं वाक्यं न क्षमामग्रजस्य ते। – ६/१६/१९

इहैव मरणं श्रेयो न तु बन्धुविगर्हणम्। – ६/१०१/१९

ई –

ईदृशं व्याहृतं कर्म न भवान् कर्तुमर्हति। – २/१०६/१८

ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे। – ३/५२/७

उ –

उक्तो न प्रतिजग्राह मर्तुकाम इवौषधिम्। – ३/४०/१

उग्रत्वं राजधर्माणां कथं देवि न बुध्यसे। – २/७/२३

उत्तरं न च वक्तव्यं शूरवाक्यान्तरे मम।।–७/६२/२०

उत्तरं साधु चिन्त्यताम्। —

उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु। – ४/१/१२२

उत्सृज्य नियमांस्तीव्रान् भ्रश्यन्ते काममन्युभिः। – २/२२/२३

उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम्। – २/२१/१३

उपकारफलं मित्रमपकारोऽरिलक्षणम्। – ४/८/२१

उपकोरण वीरो हि प्रतीकारेण युज्यते। – ४/२७/४५

ऋ –

ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम्। – २/२६/२५

ए –

एकस्य नापराधेन लोकान् हन्तुं त्वमर्हसि। – ३/६५/६

एकोहि जायते जन्तुरेक एव विनश्यति। – २/१०८/३

एति जीवन्तमानन्दो नरं वर्षशतादपि। – ६/१२६/२

एवंप्रायाणि युद्धानि विजयो नास्ति नैष्ठिकः। – ६/४६/३१

एवं मे निश्चिता बुद्धिः। – ३/४०/७

ओ–औ –

औरस्यानपि पुत्रान् हि त्यजन्त्यहितकारिणः। – २/२६/३६

क –

कः शुष्कवृक्षं वनमापतन्तं दावाग्निमासीदति निर्विशङ्कः। – ४/३३/४२

कदर्थकलुषा बुद्धिर्जायते शस्त्रसेवनात्। – ३/९/२८

कन्यापितृत्वं दुःखं हि सर्वेषां मानकांक्षिणाम्। – ७/१२/११

कर्तव्यमकृतं कार्यं सतां मन्युमुदीरयेत्। – ५/१/९७

कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम्। – २/१०९/२८

करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते। -- २/१८/३०

कलहार्थे कृते नु किम्। – ६/९/१५

कश्च प्रव्राज्यमानो वा नासूयेत् पितरं सुतः। – २/६४/६५

कस्यचिन्न हि दुर्बुद्धेश्छन्दतो जायते मतिः। – ७/१५/२५

कातर्यं च न ते युद्धे कदाचित् संस्मराम्यहम्। – ६/१११/६९

काम स्वभावो यो यस्य न शक्यः परिमार्जितुम्। – ३/५०/११

कामात्मता खल्वपि न प्रशस्ता। – २/२१/५८

कार्यकारण सिद्धौ च प्रसन्ना बुद्धिरव्यया। – ४/१८/४७

कार्याणां कर्मणां पारं यो गच्छति स बुद्धिमान्। – ६/८८/१३

कालात्ययेन दोषः स्याद् वैक्लव्यं च महद्भवेत्। – ६/१०१/३६

कालो हि दुरतिक्रमः। – ५/१६/३

किं चिरेण युयुत्सतः। – ६/५१/२१

किं नु चित्तं मनुष्याणामनित्यमिति मे मतम्। – २/४/२७

किमेव वाक्श्रमं कृत्वा यद् युक्तं तद् विधीयताम्। – ६/६३/२३

किं वक्ष्यसि सतां मध्ये कर्म कृत्वा जुगुप्सितम्। – ४/१७/३५

कुर्वतामपि पापानि नैव कार्यमशोभनम्। –

कुलाक्रोशकरं लोके धिक् ते चारित्रमीदृशम्। – ३/५३/९

कूटयुद्धा हि राक्षसाः – १/२०/८

कूटयोधी निशाचरः। –

केनायमुपदिष्टस्ते विनाशः पापकर्मणा। – ३/४१/२

केनेदमुपदिष्टं ते मृत्युद्वारमुपायतः। – ३/४१/३

कोपमार्येण यो हन्ति स वीरः पुरुषोत्तमः। – ४/३१/६

को न नन्दति नन्दितः। – ३/३१/४२

कोपं न गच्छन्ति हि सत्त्ववन्तः। – ५/५२/१६

कृते च प्रतिकर्तव्यमेष धर्मः सनातनः। – ५/१/११३

कृतं न प्रतिकुर्याद् यः पुरुषाणां हि दूषकः। –

कृतशास्त्रानुगा बुद्धिः । – २/७५/२१

कृत्यश्चारित्रसंग्रहः। – ७/१३/१८

कृत्वा कापुरुषं कर्म शूरोऽहमिति मन्यसे। – ६/१०३/१३

कृत्स्नाद् भयाद् ज्ञातिभयं कुकष्टं विहितञ्च नः। – ६/१६/८

क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च। – ३/९/२७

क्व चारण्यं क्व च क्षात्रं क्व जटाः क्व च पालनम्। – २/१०६/१८

क्व च स्वजन संवासः क्व च नीचपराश्रयः। – ६/८७/१४

ग –

गतोदके सेतुबन्धो न कल्याणि विधीयते। – २/९/५४

गतो मार्गोऽनुगम्यते। – २/२१/३६

गतं तु नानुशोचन्ति गतं तु गतमेव हि। – ६/६३/२५

गर्जन्ति न वृथा शूरा निर्जला इव तोयदाः। – ६/६५/३

गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम्। – २/३०/३६

च –

चला हि प्राणिनां मतिः। – २/४/२०

चारित्र्यमेव व्याख्याति शुचिं वा यदि वाऽशुचिम्। – २/१०९/४

चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः। – ३/३३/१०

ज –

जात्यन्ध इव जात्यन्धैर्मन्त्रयन् प्रेक्षसे नु किम्। – ४/१८/१६

ज्यायान् कुर्वीत विग्रहम्। – ६/३५/९

ज्येष्ठो मान्यः पितृसमः। –

त —

तदन्नमपि भोक्तव्यं जीर्यते यदनामयम्। —

तमापन्नः कथं शोचेद् यस्य नास्ति व्यतिक्रमः। — २/१०५/३०

तस्कराचरितो मार्गो नैष वीरनिषेवितः। — ३/५१/२९

तिष्ठेदभिमुखो रणे। — ६/२/१७

तृणैः कूपमिवावृतम्। — ४/१७/२२

त्यजाशु कोपं सुखधर्मनाशनम्। — ६/९/२२

त्वं तु कैशोरकाद् धृष्टः केवलं वक्तुमिच्छसि। — ६/६४/३

द —

दत्तस्य हि पुनर्दाने सुमहत्पुण्यमुच्यते। — ७/७६/३१

दत्ताभय—वधो नाम पातकं महदद्भुतम्। — ४/१२/३५

दण्ड एव वरो लोके। — ६/२२/४९

दारप्रदानाद्धि न दानमन्यत्। — ४/२४/३८

द्विजातिचरितो धर्मः शास्त्रे दृष्टः सनातनैः। — २/६१/२३

दीक्षितस्य कुतो युद्धं क्रोधित्वं दीक्षिते कुतः। — ७/१८/१७

दुःखितः सुखितो वाऽपि सख्युर्नित्यं सखा गतिः। — ४/८/४०

दुर्बलो हतमर्यादो न सेव्य इति मे मतिः। — ६/८३/२६

दुर्लभं हि सदा सुखम्। — २/१८/१३

दुर्वृत्तमपि कः पुत्रं त्यजेद् भुवि विचक्षणः। — २/६४/६४

देशधर्मस्तु पूज्यताम्। — ३/९/२७

द्वेष्यो भवत्यर्थपरो हि लोके। — २/२१/५८

दैवमेव परं मन्ये। — १/५८/२२

दैवं हि दुरतिक्रमम्। — ७/५०/४

दैवतं हि पतिः स्त्रियाः। — ७/९५/१०

दैवं पुरुषकारेण निवर्तयितुमर्हसि। – १/५८/२४

दोषं गुणं वा सम्पृष्टस्त्वमेवं वक्तुमर्हसि। – ३/४०/८

ध –

धनानि व्यवसायेन। – ३/४३/३२

धनुषा कार्यमेतावदार्तानामभिरक्षणम्। – ३/९/२६

धर्मं वर्धय राघव। – ७/१०६/४

धर्मः शुभं वा पापं वा राजमूलं प्रवर्तते। – ३/५०/१०

धर्मबन्धेन बद्धोऽस्मि। – २/१०६/९

धर्मसारमिदं जगत्। – ३/९/३०

धर्मो हि परमा गतिः। – ७/३/१०

धर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम्। – ५/६३/३०

धात्रा विधानं विहितं तथैव। ४/२४/४३

धिक् क्षमामकृतज्ञेषु। – ६/२२/४९

धिगस्तु परवश्यताम्। – ५/२५/२०

धिग् राज्ञां चञ्चलाः श्रियः। –

धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम्। – १/५६/२३

ध्रुवो जीवति संगमः। – ५/१३/४७

न –

न कश्चिन्नापराध्यति। – ४/३६/११

न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि। – ३/६५/४

न चातिप्रणयः कार्यः। – ४/२२/२३

न चापि कोपः स्वजने विधेयः। – ४/३३/५१

न चिरात्प्राप्यते लोके पापानां कर्मणां फलम्। – ३/२९/९

न धर्मं हातुमर्हसि। –

न नूनं दैवतं किञ्चित् कालेन बलवत्तरम्। – २/८८/११

न नृपाः कामवृत्तयः। – ४/१७/३२

न रणे शक्यते जेतुं विना युद्धेन वाग्बलात्। –

न परः पापमादत्ते परेषां पापकर्मणाम्। – ६/११३/४४

न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छति। – २/६१/१६

न विरोधो बलवता क्षमः। – १/१/५१

न विगृह्णीत दुर्बलः। – ४/५४/१२

न देशकालौ नहि चार्थधर्मावपेक्षते कामरतिर्मनुष्यः। – ४/३३/५५

न तत्समाचरेद्धीरो यत्परोऽस्य विगर्हयेत्। ३/५०/७

नयन्ति निकृतिप्रज्ञं परदाराः पराभवम्। –

न मन्युं कर्तुमर्हसि। – ४/१८/३६

न नूनं चात्मनः श्रेयः पथ्यं वा समवेक्षसे। – ३/५३/१६

न लुब्धो बुध्यते दोषान् किम्पाकमिव भक्षयन्। – २/६६/६

नरः प्रत्युपकारणामापत्स्वायाति पात्रताम्। – ७/४०/२४

न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम्। – ५/२५/२०

न शूरपत्न्यः परिदेवयन्ति। – ४/२४/४३

न शोकपरितापेन श्रेयसा युज्यते मृतः। –

न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः। – ६/१८/१५

न स संकुचितः पन्था येन वाली हतो गतः। – ४/३४/१८

न स क्षमः कोपयितुं यः प्रसादयितुं पुनर्भवेत्। – ४/३२/२०

न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः। – ६/२१/१६

न सुखाल्लभते सुखम्। – ३/९/३१

न सुतान्मन्यते परम्। – २/७४/२५

न हि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः। – ४/५९/२८

न हि क्षुभ्यति दुर्धर्षः समुद्रः सरितांपतिः। – २/३४/४६

न हि निम्बात् स्रवेत्क्षौद्रं लोके निगदितं वचः। – २/३५/१७

न हि दुष्टात्मनामार्य मा वसत्यालये चिरम्। –

न हि धर्माभिरक्तानां लोके किञ्चन दुर्लभम्। –

न हि प्रतिज्ञां कुर्वन्ति वितथां सत्यवादिनः। –

न हि धर्मार्थसिद्ध्यर्थं पानमेवं प्रशस्यते। ४/३३/४६

न हि मां केवलं रोषात्त्वं विगर्हितुमर्हसि। – ४/१८/१७

न हि स्त्रीषु महात्मानः क्वचित् कुर्वन्ति दारुणम्। –

न ह्यनिष्टोऽनुशास्यते। – ३/१०/२१

नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित्। – ५/५५/५

नातन्त्री वाद्यते वीणा नाचक्रो विद्यते रथः। – २/३९/२९

नापतिः सुखमेधेत या स्यादपि शतात्मजा। – २/३९/२९

नापराध्यति धर्मात्मा कथं तस्यापराध्यसि। – ३/५०/१३

नातिप्रसङ्गः कर्तव्यः। – ७/५२/१२

नातिवर्तेः सतां गतिम्। – २/१११/४

नाधर्मं वोढुमर्हसि। – १/२१/७

नावज्ञा रिपवे कार्या। –

नात्युत्साहात् परं बलम्। – ४/१/१२१

नास्ति कश्चिद्धि कस्यचित्। – २/१०८/४

नास्ति पुत्रसमः प्रियः। – २/७४/२४

नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे। – ७/१०/१६

निर्गुणः स्वजनः श्रेयान्। ६/८७/१५

निश्चेष्टाः क्षत्रिया मन्दाः। – ६/२/१९

नित्यं जिह्मा हि राक्षसाः। –

निमित्तानि च पश्यामि मनो मे सम्प्रहृष्यति। – ६/२/२४

निर्वैरो हि सुखी भव। – ६/६५/२

नियुक्तैर्मन्त्रिभिर्वाच्यो ह्यवश्यं पार्थिवो हितम्। – ४/३२/१८

प –

पतिशुश्रूषणान्नार्यास्तपो नान्यद् विधीयते। – २/११८/९

परमापद्गतस्यापि धर्मे मम मतिर्भवेत्। – ७/१०/३०

परान्तकाले हि गतायुषो नराः हितं न गृह्णन्ति सुहृद्भिरीरितम्।– ६/१६/२६

परैर्वा हन्यते वीरः परान् वा हन्ति संयुगे। – ६/१०९/१७

परेषां सहसाऽवज्ञा न कर्तव्या कथंचन। – ६/९/१२

पितुर्नियोगे स्थातव्य एष धर्मः सनातनः। – २/२१/४९

पितुर्हि वचनं कुर्वन् न कश्चिन्नाम हीयते। – २/२१/३७

पिता हि दैवतं तात देवतानामपि स्मृतम्। – २/३४/५२

पापस्य हि फलं दुःखम्। – ७/१५/२४

पानादर्थश्च धर्मश्च कामश्च परिहीयते। – ४/३३/४६

पीडाकरममित्राणां यच्च कर्तव्यमेव तत्। – ६/८१/२८

पितॄन् समनुजायन्ते नरा मातरमङ्गनाः। – २/३५/२८

पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्यापकर्षकः। – ६/२/१३

पुष्पं दृष्ट्वा फले गृध्नुः। – २/६३/८

पूर्वापकारिणं हत्वा न ह्यधर्मेण युज्यते। –

पौरुषेण तु यो युक्तः स तु शूर इति स्मृतः। – ६/७१/५९

प्रतिज्ञायां तु नष्टायां धर्मो हि विलयं व्रजेत्। – ७/१०६/९

प्रतिज्ञा च कथं शक्या मद्विधेनानवेक्षितुम्। – ४/१८/२७

प्रभवन्तं पदस्थं हि परुषं कोऽभिभाषते। – ६/३६/७

प्रतिवक्तुं प्रकृष्टे हि नाऽपकृष्टस्तु शक्नुयात्। – ४/१८/६६

प्रत्यक्षं यत् तदा तिष्ठ परोक्षं पृष्ठतः कुरु। – २/१०८/१७

प्रवृत्तिरेषा भूतानाम्। – २/१०८/१२

प्रसादये त्वां बन्धुत्वात् कुरुष्व वचनं मम। – ६/९/२०

प्राणिनः कस्य नापदः। – ३/६६/६

प्रीतिरल्पेऽपि भिद्यते। – ४/३२/७

ब –

बहुविघ्नं तपो नित्यम्। – ३/१०/१४

बालानां तु शुभं वाक्यं ग्राह्यम्। – ७/८३/२०

बालेन पूर्वजस्याज्ञा कर्तव्या नात्र संशयः। – ७/६२/२१

बुद्धिमोहः कथमयं सम्भूतस्त्वयि गर्हितः। – २/७३/२४

भ –

भक्तिं भक्तेषु दर्शय। – २/४५/२९

भये सर्वे हि बिभ्यति। – ४/८/३५

भव सत्यप्रतिश्रवः। – ४/३१/५१

भूमिर्हिरण्यं रूपं च विग्रहे कारणानि वै। – ४/१७/३१

म –

मतिमान्मानुषे लोके युद्धे न प्रणयी भवेत्। – ७/२०/१०

मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने। – ५/११/४२

मन्युर्न खलु कर्तव्यः। – २/३२/४०

मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि। – ६/१७/२०

मरणान्तानि वैराणि। – ६/१०९/२५

मा प्रतिज्ञा वृथा कृथाः। – ७/१०६/९

मा विप्र मन्युराविशेत्। – १/१०/३१

मित्रमुखोऽसि शत्रुः। – ६/१५/१०

मित्ररूपेण शत्रुणा। – ३/३१/४२

मित्रं स्वस्थानकुपितं जनयत्येव सम्भ्रमम्। – ४/३२/६

मुमूर्षूणां च सर्वेषां यत्पथ्यं तन्न रोचते। – ३/५३/१७

मैत्रेणेक्षस्व चक्षुषा। – २/९२/७

मृतो हि किमशिष्यति। – २/१०८/१४

मृदुर्हि परिभूयते। – २/२१/११

य –

यतस्व द्विषतां वधे। – ३/६६/२०

यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः। – २/१०९/९

यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः। – २/१०४/१५

यद् रोचते तत्कुरु मा चिरेण। – ३/९/३३

यमक्षयमनुप्राप्ता द्रक्ष्यन्ति नहि मानवाः। – २/६४/६२

यादृशं कुरुते कर्म तादृशं फलमश्नुते। – ७/१५/२५

ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम्। – ४/७/१२

युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः।

र –

रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम्। – २/३७/३

राजस्तिष्ठ स्वसमये भव सत्यप्रतिश्रवः। – ४/३१/५१

राज्ञां वै चञ्चलाः श्रियः। – ६/१११/९०

राज्ञो विप्रतिकूलस्थो न जातु सुखमेधते। – ३/४०/२६

राजानां वहुमित्राश्च विश्वासो नात्र हि क्षमः। – ४/२/२१

राम तेन तु दुर्जीवं यः परानुपजीवति – २/१०५/७

रामो द्विर्नाभिभाषते। – २/१८/३०

ल –

लक्षणं हि महत्त्वस्य प्रतिज्ञापरिपालनम्। – ६/१०१/५२

लोकपीडाकरं कर्म न कर्तव्यं कदाचन।

लोकापवादो बलवान्। –

व –

वयस्यः परमा गतिः। – ४/८/८

वयस्यस्योपकर्तव्यं धर्ममेवानुपश्यता। –

वर्तस्व च सतां क्रमे। – २/२५/२

वाचा त्वं किं विकत्थसे। –

विजयो नास्ति नैष्ठिकः। – ६/४६/३१

विनष्टे वा प्रणष्टे वा शोकः सर्वार्थनाशनः। – ६/२/१५

विद्यते गोषु सम्पन्नम्।

विद्यते स्त्रीषु चापल्यम्।

विद्यते ज्ञातितो भयम्।

विद्यते ब्राह्मणे तपः।–६/१६/९

विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम्। – ५/१३/४७

विश्वस्तानामविश्वस्ताश्छिद्रेषु प्रहरन्त्यपि। – ४/२/२२

विषपानं पिबस्येतत् पिपासित इवोदकम्। – ३/५१/२५

वृत्तमावरणं स्त्रियाः।–६/११४/२७

वाक्यं निष्फलमत्यर्थं बीजमुप्तमिवोषरे। – ३/४०/३

वाङ्मतिभ्यां हि सर्वेषां करिष्यामि प्रियं हि वः।

वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित्। – ५/५५/५

श –

शासनं दुरतिक्रमम्। – ७/६३/३

शुभकृच्छ्रमवाप्नोति पापकृत्पापमश्नुते। –

शूराय न प्रदातव्या कन्या खलु विपश्चिता।

शोकश्च किलकालेन गच्छता ह्यपगच्छति। – ६/५/४

शोकः सर्वार्थनाशनः। – ६/२/१५

श्रेयो न पश्यन्ति नृपस्य दोषात्। – ६/३४/२८

स –

सत्यमिष्टं हि मे सदा। – ३/१०/१८

सत्ये लोकः प्रतिष्ठितः। – २/१०९/१०

सत्यान्नास्ति परं पदम्। – २/१०९/१३

सत्यधर्माभिरक्तानां नास्ति मृत्युकृतं भयम्। – ६/४६/३३

सन्ततिर्हि तवाख्यानि भविष्यच्छुभभाग्यताम्।

सन्तश्चारित्र भूषणाः। – ६/११३/४४

सन्निकृष्टस्य सौहार्दं जायते स्थावरेष्वपि। – २/८/२८

स निरर्थं गतजलं सेतुं बन्धितुमिच्छति। – २/१८/२३

स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते। – ६/६३/२७

स भारः सौम्य भर्तव्यो यो नरं नावसादयेत्।

सर्वं क्रोधोऽपकर्षति। – ७/प्र०२/२१

सम्पृष्टेन तु वक्तव्यम्। – ३/४०/९

सर्वे चण्डस्य बिभ्यति। – ६/२/१९

समुन्मूलय शोकं त्वं व्यवसायं स्थिरं कुरु – ४/२७/३७

समीक्ष्य कालं पुनरास्तिकोऽभवं भवेय काले पुनरेव नास्तिकः।– २/१०९/३८

सर्वेऽपिजन्तवोऽन्योन्यं भेतव्ये सति।

सर्वथा सुकरं मित्रं दुष्करं प्रतिपालनम्। – ४/३२/७

सर्वदा सर्वभूतानां नास्ति मृत्युरलक्षणः। ६/१११/२९

सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते।

साधु धर्मे व्यवस्थानं क्रियतां यदि शक्यते। – ७/१३/१८

सापराधो हि बालोऽपि रक्षितव्यः स्वबान्धवैः। – ७/१३/२०

सैन्यैः परिवृतो व्रज। – ६/६५/२४

सोत्साहस्य हि लोकेऽस्मिन् न किञ्चिदपि दुर्लभम्। – ४/१/१२१

सौभ्रात्रं नास्ति शूराणाम्। – ७/११/१४

सौहृदाज्जायते मित्रमपकारोऽरिलक्षणम्।

ह –

हितार्थमेतदुक्तं वः क्रियतां यदि रोचते।

हितं वयस्यभावेन ब्रूमि नोपदिशामि ते। – ४/७/१४

हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नराः। – ७/१०६/३

हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभम्। – ४/१८/१५

हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा। – ६/१६/३

क्ष –

क्षत्रियो निहतः संख्ये न शोच्य इति निश्चयः। – ६/१०९/१८

०००

# उपसंहार:

## *रामराज्यम्*

प्रहृष्ट मुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः।
निरामयो ह्यरोगश्च दुर्भिक्ष भयवर्जितः।।
न पुत्रमरणं केचिद् द्रक्ष्यन्ति पुरुषाः क्वचित्।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः।।
न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः।
न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा।।
नचापि क्षुद्भयं तत्र न तस्करभयं तथा।
नगराणि च राष्ट्राणि धनधान्ययुतानि च।।
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा।
न पर्यदेवन् विधवा न च व्यालकृतं भयम्।
न व्याधिजं भयं चासीद् रामे राज्यं प्रशासति।।
निर्दस्युरभवल्लोको नानर्थं कश्चिदस्पृशत्।
न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते।।
सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत्।
राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम्।।
नित्यमूला नित्यफलास्तरवस्तत्र पुष्पिताः।
कामवर्षी च पर्यन्यः सुखस्पर्शश्च मारुतः।। – ६/१२८/९८–१००,१०३
निरामया विशोकाश्च रामे राज्यं प्रशासति।। – ६/१२८/१०१
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा लोभविवर्जिताः।
स्वकर्मसु प्रवर्तन्ते तुष्टाः स्वैरेव कर्मभिः।।

आसन् प्रजा धर्मपरा रामे शासति नानृता।

सर्वे लक्षणसम्पन्नाः सर्वे धर्मपरायणाः। – ६/१२८/१०४–१०५

रामो रामो राम इति प्रजानामभवन् कथाः।

रामभूतं जगदभूत् रामे राज्यं प्रशासति।। – ६/१२८/१०२

शुभाशंसनपूर्वकं ग्रन्थमुपसंहरति

काले वर्षतु पर्यन्यः सुभिक्षं विमला दिशः।

हृष्टपुष्ट जनाकीर्णं पुरं जनपदास्तथा।

स्वस्ति गो ब्राह्मणेभ्यस्तु लोकानां ये च सम्मताः।

जयतां राघवः संख्ये रावणं राक्षसेश्वरम्।। – ३/२३/२८

सिद्धिं दिशन्तु मे सर्वे देवाः सर्षिगणास्त्विह।

सिद्धि सर्वाणि भूतानि भूतानां चैव यः प्रभुः।

दास्यन्ति मम ये चान्येऽप्यदृष्टाः पथिगोचराः। – ५/१३/६८–६७

०००

इति सन्दिश्य बहुशोमुनिः प्राचेतसस्तथा।

वाल्मीकिः परमोदारस्तूष्णीमासीन् महामुनिः।। – ७/९३/१७

०००




# मिथिला रिसर्च सोसाइटी

लहेरियासराय, दरभंगा

**देसिल बयना सब जन मिट्ठा**
**ते तैसन जम्पओ अवहट्ठा**

**(Mahakavi Vidyapati)**

**Mithila Research Society** has undertaken initiative of digitalization of rare and classical literary and research works in Maithili for readers and researchers. This is purely an attempt to preserve and popularize great works in Maithili for present and future generations to know their rich literary treasures. Art and literature shape a civilization. Mithila a cradle of learing has a glorious literary tradition right from Jyotirishwar Thakur and Mahakavi Vidyapati (medieval age) to Chanda Jha (pre independence era) to modern age.

There is an exhaustive list of author, poet, playwright, critic and likes who chiseled Maithili literature into a great mosaic. Contribution of legends like Abhinav Vidyapati Bhavpritanand Ojha, Pandit Surendra Jha Suman, Kashikant Mishra Madhup, Kanchinath Jha 'Kiran', Ramcharitra Pandey 'Anu', Radhakrishna 'Baher', Yadunath Jha 'Yaduvar', Chhedi Jha 'Madhup', Pulkit Laldas 'Madhur', Deenbandhu Jha, Janardan Jha 'Jansidan', Murlidhar Jha, Jeevan Jha, Kavivar Sitaram Jha, Upendranath Jha' Vyas' Mahamahopadhyaya Umesh Mishra, Harinandan Thakur 'Saroj', Jagdishwari Prasad Ojha, Umapati Tiwari, Mahamahopadhyaya Madhusudan Ojha, Dr Sir Ganganath Jha, Mahamahopadhyaya Parmeshwar Jha, Mahamahopadhyaya Mukund Jha Bakshi, Ayodhyay Prasad Khatri, Nayayacharya Anand Jha, Umanath Jha, Tantranath Jha, Munshi Raghunandan Das, Ramdeo Srivastava, Sahdeo Srivastava, Bindeshwar Mandal, Jagdish Prasad Karna, Girindra Mohan Mishra, Brajnandan Thakur, Kalikumar Das, Subhadra Jha, Harimohan Jha, Babu Bholalal Das, Dinanath Pathak, 'Bandhu', Shailendra Mohan Jha, Babuaji Jha Ajnat, Ramanath Jha, Fazul Rahman Hashmi, Ishnath Jha, Mayanand Mishra, Chandrabhanu Singh, RC Prasad Singh, Ramdeo Bhabuk, Dr Ramdeo Jha, Jaikant

Mishra, Krishnakant Mishra, Pandit Chandranath Mishra Amar, Pandit Govind Jha, Dr. Ramdeo Jha, Ramkishore Jha 'Vibhakar', Dr Ratneshwar Mishra, Ravindranath Thakur, and other can't be forgotten. They dedicated their life to enrich Maithili literature with their outstanding literary creations. Many died unsung despite producing some of the best literary works and sadly they were forgotten. They selflessly devoted their life to serve Mithila and Maithili and bestowed upon us a rich heritage.

It was widely felt that books in Maithili are not widely available despite their huge demand by readers. Even outstanding literary works became rare due to lack of reprint.

Mithila Research Society is trying to bridge the gap by collecting and converting them in digital form. Mithila Research Society clarifies that this is purely a non-commercial undertaking hence any commercial use of the books is prohibited.

Mithila Research Society was established in 1905 by great poet Chanda Jha along with others. The organization was named as (Mithila Tatva Vimarshini (Mithila Research Society) to promote and preserve culture and literature of Mithila and Maithili besides promotion of teaching and learning of Sanskrit and Maithili, research and printing of popular texts of Mithila, research and publication of books related to history of Mithila

Pandit Chetnath Jha, Babu KC Mishra, Mukund Jha Bakshi, Pandit Gannath Jha, Munshi Raghunandan Das and Babu Tulapati Singh were on forefront along with Chanda Jha. Mahamahopadhyaya Parmeshwar Jha had written history of Mithila named as Mithila Tatva Vimarsha on request of Mithila Research Society. But the organization despite abundance of energy an dedication and hundreds of scholars deeply involved with the activity of the association could not flourish due to lack of desired support from society to an extent that people started calling Mithila Research Society as Murda Club; a dead organisation. That was a huge loss for Mithila.

But the organization was revived around year ~~1961-62~~ 1965 by Dr Ramdeo Jha under guidance of his senior Shailendra Mohan Jha. So far by the mid of year 2018 Mithila Research Society published over 150 books of Maithili literature and regularly undertakes activities for promotion of Maithili. Dr Ramdeo Jha is heading this institution assisted by Shankardeo Jha.

Vijay Deo Jha
9470369195
8877213104
vijaydeojha@gmail.com

॥ श्री ॥



॥ बिज्ञापन ॥



# मिथिलारिसर्चसोसाइटी

सम्यगुद्योगशीलस्य सहायः स्वयमीश्वरः।

१ दरभङ्गामें एक सभा 'मिथिला रिसर्च सोसाइटी' ( मिथिला तत्व विमर्षिणी ) नामक लग भग डेढ़ वर्ष सँ अछि। ( १ ) संस्कृत विद्याक पठन पाठन बढ़ायब; ( २ ) मैथिल वा अन्यकृत ग्रन्थ जे मिथिलामें प्रचलित अछि तकर अन्वेषण ओ मुद्रित करब; मिथिला देश ओ मैथिल विद्वान् ओ अन्य विशिष्ट लोकनिक यथार्थ इतिहास लिखब; ( ४ ) मिथिलाक ऐतिहासिक स्थान ओ वस्तुसभक अन्वेषण ओ यथा साध्य जीर्णोद्धारक चेष्टा करब, ( ५ ) देशाचारानुसार आओर आओरो विषयक उन्नति करब, उक्तसभाक उद्देश्य छैक। एकर निर्वाह सकल साधारणक सहाय व्यतिरेक सम्भव नहिं। रिसर्च सोसाइटीक प्रार्थना जे मैथिलभ्रातृगण स्वोन्नतिमें प्रवृत्त होथि, परस्पर सहायता करथि, उपसभा नियुक्त कय रिसर्च सोसाइटीक साहिय करथि।

२ एहि वर्ष इहो विचार भेलअछिजे एहि सभाक द्वारा निरीक्षण पूर्वक प्राचीन दुर्लभपुस्तक मुद्रित कयलजाय। एक दुइ व्यक्ति अपना अपना द्रव्यसँ पुस्तक छपयवापर उद्यतछथि। ओ एहिसभाक द्वारा छपाओलजायत। परन्तु एक दुइ व्यक्तिक साध्य एहनभारी कार्य नहिं, एकर तीनि उपाय छैक—

Scanned by CamScanner